श्रीः

# काश्मीरशैवदर्शनस्य बृहत्कोषः

(तस्यप्रतीकात्मकोऽयं भागः)

A Fascicule of the

# ENCYCLOPAEDIA OF KASHMIR SAIVISM



DR. B. N. PANDIT

SRI RANVIR KENDRIYA SANSKRIT VIDYAPEETHA,
JAMMU.

❀ श्रीः ❀

# काश्मीरशैवदर्शनस्य बृहत्कोषः

( तस्य प्रतीकात्मकोऽयं भागः )



प्रधानसम्पादकः

डा० मुरलीधरपाण्डेयः प्रधानाचार्यः,

श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठम्, जम्मू ।

(शैवदर्शनकोष-परियोजनायाश्चतुर्थः परिस्पन्दः)

# प्राक्कथनम्

गतैः पञ्चभिर्वर्षैर्यस्य काश्मीर-शैवदर्शनबृहत्कोषस्य निर्माणं श्रीरणवीर-केन्द्रीयसंस्कृत-विद्यापीठे शैवदर्शनकोष-परियोजनानुसारं विधीयते तस्य विषयजातं बहुधा सङ्गृहीतप्रायम्। इदानीं तस्य सम्यक् सम्पादनं प्रकाशनं च कर्तव्यशेषतया वर्तते।

राष्ट्रियसंस्कृतसंस्थानस्य सुदूरदर्शिनां निदेशकमहोदयानां डा० श्री-मण्डनमिश्रमहाभागानां सन्निदेशेनेदानीमस्य बृहत्कोषस्य लघुकायः प्रतीकात्मकोऽयं भागः सम्पाद्य प्रकाश्यते। वितरिष्यतेऽयं विद्वद्वरेण्येषु तेषां सत्सम्मतिप्राप्त्यर्थम् येनात्र मनागपि दोषलेशो त्रुटिलेशो वा नावशिष्येत। ततो विपश्चित्-सत्-सम्मत्यनुसारमेवास्य पार्यन्तिकं सम्पादनं विधास्यते, तदनन्तरमेव च मुद्रण प्रकाशनं च।

अस्य प्रतीकात्मकस्य कोषभागस्य सम्पादन-प्रकाशनविषये प्रथमं डा० श्रीमण्डनमिश्रमहाभागाः भूरिधन्यवादार्हा येषां सत्प्रेरणयेदं कार्यं विधीयते। ततः श्रीरणवीर-केन्द्रीय-संस्कृत-विद्यापीठस्य प्रधानाचार्यवर्याः अपि धन्यवादार्हा यैरस्य सम्पादने प्रकाशने च पदे पदे सत्परामर्शः सहयोगश्च प्रदत्तौ।

अन्तेऽस्मत्शोधसहाया डा० श्री-द्वारिकानाथ—व्रजनन्दन—गिरिजाशर्माणोऽपि धन्या येषां सहयोगेन कार्यमेतत् सुसम्पन्नम्।

**डा० बलजिन्नाथ-पण्डितः**

शैवदर्शनकोषपरियोजनायाः

शोधनिदेशकः

१५-५-८५

# उपोद्घातः

काश्मीरशैवदर्शनस्य चत्वारो ग्रन्थकाराः परिपूर्णज्ञानवन्तो योगसिद्धिभाजः, सर्वशास्त्रमर्मज्ञाः, ग्रन्थनिर्माणे चातीव निपुणाः । ते च भट्टकल्लटः, सोमानन्दः, उत्पलदेवो, ऽभिनवगुप्तश्चेति । अस्य शास्त्रस्य सिद्धान्तपक्षस्य, प्रयोगपक्षस्य च परिपूर्णो विकासोऽभिनवगुप्तस्यैव ग्रन्थरत्नैर्व्याख्याभिश्च सम्पन्नः । श्रुत्यात्मको मुख्य आधारश्चास्य शैवशास्त्रस्यैकतः शिवसूत्रम्, अपरतस्त्रिकाख्या आगमास्त्रयः । चतुष्षष्टिभैरवागमानां मध्ये विशेषतः स्वच्छन्दतन्त्रं, रुद्रयामलतन्त्रं चाधारीकृतमाचार्यैः । क्वचित क्वचित् पुनः किरण-स्वायम्भुवाद्या रुद्रागमा अप्याश्रितास्तैः । रहस्यसाधनाविषये कौलिकागमानामप्याश्रयोऽवलम्बित आचार्याभिनवगुप्तैः । तदस्य बृहत्कोषस्य निर्माणमागमशास्त्रानुसारमाचार्यचतुष्टयकृतग्रन्थानुसारं च विधीयते मुख्यतः । शिवसूत्रमप्यागमतयैव स्वीकृतं मन्तव्यम् । अवराणां शास्त्रकृतां मध्ये तन्त्रालोकविवेककृज्जयरथ एव भूरिशः समाश्रितः । अन्येषां ग्रन्थकाराणामाश्रयः क्वचित् क्वचिदेव गृहीतः । यथोत्तरं मुनीनां प्रामाण्यमिति न्यायेनाभिनवगुप्तस्य विचारा एव मुख्यतया प्रामाण्यं भजन्ते । इति कोषस्यास्य निर्माणे तेषां प्राधान्यं सर्वत्र स्वीकृतम् ।

क्षेमराजेन स्वकीयस्य विशिष्टवैदुष्यस्य प्रदर्शनार्थं सरलाः विषया वक्रया रीत्यो प्रतिपादिताः, प्रभाविताश्चाग्रिमाः ग्रन्थकृतः । ततस्तेषां सर्वेषामपि ग्रन्थाः क्वचित् क्वचिदेवाधारत्वेनाश्रिता अत्र कोषे । जयरथस्तु

बहुशः समाश्रयणीयो, यतस्तत्कृतस्य 'विवेकस्य' साहाय्यं विना तन्त्रालोको दुर्बोधः।

आधुनिके युगे यैः शोधविद्वद्भिः काश्मीरशैवदर्शनविषये शोधकार्य-मुपक्रान्तं तैः शास्त्रस्यास्याध्ययनं क्षेमराजीयान् ग्रन्थानेवादाय प्रारब्धं नाभिनवगुप्तीयान्। ततः क्षेमराजीयाः संस्कारास्तेषां लेखेषु प्रधानतया प्रकटतामायाताः। किञ्च—ते प्रारम्भिकाः शोधविद्वांसोऽद्वैतवेदान्तसम्ब-न्धिनो विवर्त्तवादस्य बौद्धानां च विज्ञानवादस्य संस्कारैः प्रभाविता अभूवन्; ततो न ते काश्मीरशैवदर्शनस्य सर्वथा यथार्थं स्वरूपं विदुषां पुरतः प्रकटने सफला अजायन्त। किञ्च सन्ति योगादिसम्बन्धिनः भूयांसो विषयाः शैवदर्शनस्य येषामन्तः शोधविदुषां दृष्टिः प्रवेशं नालभताद्यावधि। इदानीन्तनाः शोधकारा गतानुगतिकनयोपाधिप्राप्तय एव यतमानाः दृश्यन्ते। विरलविरला एव शास्त्रतत्त्वेषु प्रविविक्षवः। परं ते शास्त्रतत्त्वान्त प्रवेशो-पायानलभमानाः खिद्यन्ते।

अतः काश्मीरशैवदर्शनस्य सूक्ष्मातिसूक्ष्माणां शास्त्रतत्त्वानामध्ययने-ऽविकृते च शोधकर्मणि रतानां विदुषां जिज्ञासूनां च हितं विधातुं शास्त्रत-त्त्वानि याथार्थ्येन प्रकाशयितुम्, आपाते आभासमानाः शङ्काश्चापनेतुं काश्मीरशैवदर्शनस्य बृहत्कोषोऽयं निर्मीयते। सर्वथा प्रमाणभूतानां सिद्ध-गुरूणां ग्रन्थानाश्रित्यैवास्य कोषस्य यतो निर्माणं विधीयते ततः सर्वथा सत्पथप्रदर्शकोऽयं बृहत्कोषः।

अत्र कोषे सर्वासां परिभाषाणां लक्षणानि यथा प्राचीनैर्ग्रन्थकृद्भि-र्निबद्धानि तथा स्पष्टीक्रियन्ते तत्तद्ग्रन्थपंक्तिसमुद्धरणपूर्वकम्। आपाततो दृश्यमानो विरोधोऽपि मूलग्रन्थपंक्त्याधारेणैव परिह्रियते, सत्यं च तात्पर्यं स्पष्टं प्रतिपाद्यते। ग्रन्थकर्तृणां यावल्लभ्य इतिहासोऽपि सप्रमाणवाक्यं निबद्ध्यतेऽत्र। एवमेव ग्रन्थानां परिचयोऽपि दीयते। एतत्त्रिप्रकारक-शब्दातिरिक्ततयात्र बृहत्कोषे ग्रन्थरचनायामप्रवृत्तानामपि प्राचीनानां शैवशास्त्रगुरूणां परिचयः, अलभ्यानां ग्रन्थानां, नाममात्रतश्च लभ्यानां तेषां कश्चन परिचय, इदानीमलभ्यानां ग्रन्थानां ताः पङ्क्तयो या अन्यत्र ग्रन्थेषु समुद्धृताः, इत्येवंप्रायं सर्वमपि ज्ञानार्हं वस्तुजातमत्र बृहत्कोषे प्रमाणनिर्देश-पुरःसरं संगृहीतं वर्तिष्यते।

वर्तमाने युगे निर्मितेषु कोषेषु व्याख्येयाः शब्दाः प्रायः प्रथमान्ताः स्वल्पकलेवराश्च निबद्धयन्ते । परमत्र बृहत्-कोषे काश्मीर-शैवदर्शनस्य केषामपि विशेषसिद्धान्तानामपि परिचयो दीयते । ते च सिद्धान्ताः क्वचित् क्वचिद् लघुकार्यैः प्रथमान्तैश्च शब्दैर्न निर्देष्टुं शक्याः । ततस्ते शब्दकदम्बकैर्निबद्धाः क्वचित् क्वचिद् दृश्यन्ते । सैषा कोषनिर्माणशैलीविरुद्धा नीतिः क्षन्तव्या विद्वद्भिः, यतोऽनया नीत्या विना तेषां विशेषसिद्धान्तानां स्पष्टीकरणं दुष्करमिव ।

व्याख्येयाः शब्दाः स्थूलैरक्षरैर्व्याख्याः, उद्धरणानि, मूलग्रन्थप्रकरणसङ्केताश्च त्रयोप्यंशाः मध्यमकार्यैः परं भिन्नभिन्नाभिराकृतिभिर्युतैरक्षरैः निबद्धयन्ते; येन व्याख्यावाक्यानि ग्रन्थपंक्तिसमुद्धरणानि चापातत एव पृथक् पृथक् प्रतीतानि भवेयुः ।

काश्मीरशैवदर्शनबृहत्कोषस्य प्रतीकात्मकोऽयं भागो विदुषां सम्मतिलाभाय प्रकाश्य तेभ्य उपह्रियते । यथैष बृहत्कोषो बहुतरहितायालं भवेद्, यथा च रुचिरतरो विद्वत्प्रियश्च सम्पद्येत तथा विद्वांसः कृपया सन्देष्टुमर्हन्ति, येन मुद्रणोचिताऽस्य बृहत्कोषस्य परिपूर्णा पाण्डुलिपिः सत्सम्मत्यनुसारं निर्मीयेतेति प्रार्थयते विदुषां वशंवदः कोषकारो —

डा. बलजिन्नाथपण्डितः,

ता. १५-५-१९८५

शोधनिदेशकः,
श्रीरणवीर-केन्द्रीय-संस्कृत-विद्यापीठे,
गान्धीनगरे, जम्मूपुरे ।

**अकल:** कलातत्त्वस्य तदुद्भूतानां च मायीयानां तत्त्वान्तराणां सम्पर्केण रहितः प्रमाता। स्वत एव कलाद्युत्तीर्णो न विज्ञानप्रभावेण नापि प्रलयकारणादकलतां प्राप्तः शुद्धः प्रमाता। स च सर्वथैवाभेदनिष्ठत्वात् शैवशास्त्रेषु 'शिव' इत्येवोक्तो बहुशः (तद्यथा प्रमातृगणनाप्रकरणे मालिनी-विजयोत्तरे—)

शिवादि-सकलात्मान्ता. शक्तिमन्त. प्रकीर्तिता: । इति (मा० वि० तं० २-३) पाञ्चदश्योपदेशप्रकरणेऽपि—

त्रिधा मन्त्रेश्वरेशाना: शिवः साक्षान्न भिद्यते। (तदेव २-७)

तत्र शिवा:, मन्त्रमहेशा:, मन्त्रेशा:, मन्त्रा:, विज्ञानाकला:, प्रलयाकला:, सकला इति सप्त शक्तिमन्तः (तं० सा० पृ० ९२) दृश्यतां च तदेव— पृ० ९४; तं० आ० १०-११, १२ इति च।

वस्तुतः साक्षादनुभूताभेदात्मकशिवभावाः परे योगिनः शिवेन साकं सर्वथैकीभावप्राप्तेः प्राक् कञ्चित् कालं स्वात्म-शिवाभेद-चमत्कार-रसं रसयन्तस्तिष्ठन्ति। त एवाकलाः। ते केवलम् "अहम्" इत्येवमेव प्रकाशन्ते, सर्वमपि च "अहम्" इत्येवमेव पश्यन्ति, विमृशन्ति च। न तेषां क्वापि कथमपि किमपि "इदम्" इत्येवमात्मकः कश्चनापि प्रकाशो वा विमर्शो वा। प्रत्यक्षाद्वैत-दर्शिनस्ते। शिवतत्त्वं शक्तितत्त्वं चोभयमभेदभूमिकानिष्ठम्। अत उभयत्र अकलानामेव स्थितिः। तेषु केचन स्वात्मनः शिव-भावमेव विशेषतो रसयन्तः शाम्भवाः इत्युच्यन्ते। अपरे विशेषतया शक्तिभावरसास्वादनिष्ठाः पुनः शाक्ताः इति। उभयेऽपि तावद-

कला एव । तत्त्वाध्वधारणोपयोगविशेष एवैतद् द्विधा विभाजनं तेषाम् ।

उक्तं तत्त्वाध्वप्रकरणे—अत्र च तत्त्वेश्वराः शिव-शक्ति-सदाशिवेश्वरानन्ताः । ब्रह्मेव निवृत्तौ । एषां सामान्यरूपाणां विशेषा अनुगतिविषयाः पञ्च; तद्यथा—शाम्भवाः, शाक्ताः, मन्त्रमहेश्वराः, मन्त्रेश्वराः, मन्त्रा इति । (तं० सा० पृ० ७४, ७५)

**—प्रयोगानुसारम्** यद्यपि पण्डितपरम्परायामकलः शिव एव, तथापि शास्त्रेषु प्रलयाकलौ विज्ञानाकलश्चाप्युच्येते अकल इति पदेन; सन्त्येकपदान्यवधारणानि, सत्या, भामा चापि सत्यभामेतिर्वैयाकरणन्यायतः । उक्तं यथा—

यथात्र सकले भेदो न तथा त्वकलादिके ।

(तं० आ० १०-१२८)

सुस्फुटः सकले भेदो यः प्रलयाकलादौ नास्ति ।

(तं० आ० वि० खं० ७. पृ. ९२)

**—अस्य शक्तिः** पारमैश्वर्यात्मिका स्फुटस्वातन्त्र्यरूपा अनिरुद्धा इच्छा तावदकलस्य शक्तिर्यया ऽसावभेदात्मकं स्वं शिवत्वं रसयति, सृष्टिसंहारादिकं च यथेच्छं सम्पादयितुं प्रभवति । तदुक्तं शक्तिशक्तिमद्विचारप्रकरणे—……इच्छात्मिका स्फुटस्वातन्त्र्यात्मिका शिवस्येति शक्तिभेदाः सप्त मुख्याः । (तं० सा० पृ० ९४)

**—परिभाषानुसारम्** कलायास्तद्विकारेभ्यश्चोत्तीर्णाः प्रमातारः । कलापदेन शुद्धविद्याप्युपलक्ष्यते । तेन शुद्धविद्याक्षेत्रादप्युत्तीर्णाः सादाशिवादपि तत्त्वादुपरि शिवशक्तितत्त्वयोः स्थिताः प्रमातारः । यद्यपि तस्मिंस्तत्त्वद्वये न कश्चनापि भेदस्तथापि बुद्धिक्षेत्रे विधीयमाने सूक्ष्मतरे तत्त्वविश्लेषणे शिवतत्त्वं शक्तितत्त्वं च पृथक् पृथक् गण्येते । तदनुसारं शिवतत्त्वे स्थिताः प्रमातारः शाम्भवाः, शक्तितत्त्वे च स्थितास्ते शाक्ताः इत्युक्ता-

स्तन्त्रसारे। उभयेऽपि कश्मीरेषु पण्डितपरम्परायामकला इत्येव गण्यन्ते। अन्यथा सप्त एव प्रमातृवर्गाः इति परम्परा खण्डेचत। यतः पृथग् गणने संख्याष्टाविति। उक्तं च –

अत्र च तत्त्वेश्वराः – शिव-शक्ति-सदाशिवेश्वरानन्ताः ब्रह्मेव निवृत्तौ; एषां सामान्यरूपाणां विशेषा अनुगतिविषयाः पञ्च, तद्यथा – शाम्भवाः, शाक्ताः, मन्त्रमहेश्वराः, मन्त्रेश्वराः, मन्त्राः, इति शुद्धोऽध्वा। इयति साक्षात् शिवः कर्ता। (तं० सा० पृ० ७४, ७५)

ते चाकला द्विप्रकाराः। तत्र केचन स्वस्वातन्त्र्यमहिम्नैव कलायाः शुद्धविद्यायाश्च क्षेत्राभ्यामुपर्येव विचरन्ति। ते च शाम्भवाः, शाक्ताश्चेति द्विप्रकाराः। इतरे कारणवशात् कञ्चित्-कालं कलायाः विकारेभ्यो मुक्तास्तिष्ठन्ति। ते च विज्ञानाकलाः प्रलयाकलाश्चेति द्विप्रकाराः। तेषां लक्षणे स्वे स्वे स्थाने द्रष्टव्ये।

तदुक्तम् –

अकलौ द्वौ परिज्ञेयौ सम्यक् स्वप्नसुषुप्तयोः।

(मा० वि० तं० २-२८)

**अकलौ** कारणवशात् कलाविकारेभ्यः कञ्चित्कालं मुक्तौ प्राणिवर्गौ। तौ च स्वात्मनः प्रकाशमात्रस्य साक्षात्कारेणावान्तरप्रलयकालान्तं यावत् कलाविका-रेभ्यो मुक्तो विज्ञानाकलवर्ग, प्रलयकालावधि वा प्रलयकारणाद्वा तथाभूतामवस्थां प्राप्तः प्रलयाकलवर्गः। ता शास्त्र प्रमातृवर्गगणनावसरे अकलौ केवलिनौ वा इत्युच्येते।

तद्यथोक्तम् –

महेश्वरेशमन्त्राणां तथा केवलिनोर्द्वयोः॥

अनन्तभेदतैवैवं स्थिता सकलवत् किल।

(तं० आ० १०-१२३, २४)

**अकुलः** सदाशिवादि-क्षित्यन्त-तत्त्वजातात्मकात कुलादुत्तीर्णः शिवः। स्वशक्त्या सदाशिवादिधरान्त-प्रपञ्च-सृष्ट्यादिकर्ता। उक्तं यथा–

अकुलस्यास्य देवस्य कुल-प्रथन-शालिनी ।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः ॥

(तं० आ० ३-६७)

अत्र जयरथेन कृतमकुलपदस्य व्याख्यानं न सर्वथा समीचीनम्, उत्पथप्रवर्तकत्वेन तस्य । उक्तं हि तेन—पूर्णात् परसंवित्तत्त्वलक्षणात् कुलाद् यदन्यदवभासितं शिवलक्षणमकुलं तस्य प्रकाशैकरूपत्वेन द्योतमानस्य ........................ । (तं० आ० वि० खं० २ पृ० ७५) वस्तुतस्तु सृष्टमेव तत्त्वजातं सदाशिवादिधरान्तं कुलम । शिव-शक्ति-परम-शिवात्मकं तत्त्वत्रयं कुलादुत्तीर्णं सदकुलम । तच्च तत्त्वत्रयं वस्तुत एकमेव तत्त्वम् । तदेवाकुलम् । तस्य शिवतया, शक्तितया, परम-शिवतया च यत् प्रतिपादनमात्र तत्तावत् केवलं शिष्यजनावबोध-नार्थं, तत्त्वाध्वधारणायां च साक्षिरूपत्वेनावलम्बनार्थमेव कल्पितं गुरुभिः । ततो न तथा विभाजनं पारमार्थिकम् । ततः शिवस्य परसंविद्रूपत्वाद् यद् भिन्नत्वेन कथनं तन्न समीचीनम् । परैव-संवित् शिवरूपतया, शक्तिरूपतया परमशिवरूपतया चोपदिश्यते-ऽवबोधनोपासन-सौकार्यार्थमेव न वस्तुतो भेदप्रदर्शनार्थम् । ततस्त्र-यमप्येतदकुलमेवैकं तत्त्वमिति विदाङ्कुर्वन्तु सुधियः ।

**अकुलम्-मूलतः** वश्वोत्तीर्णमनुत्तरं परं तत्त्वम् । उक्तं यथा—

अनुत्तरं परं धाम तदेवाकुलमुच्यते । (तं० आ० ३-१४३)

**अघोराः शक्तयः** बद्धाञ्जीवान् शिवभावसमापत्तिं प्रति प्रेरयन्त्यः परमशिवस्य पराः शक्तयो यासामधिष्ठात्री मोक्षमार्गे प्रवर्तिनी भगवती ज्येष्ठा शक्तिः । तदुक्तम्—

पूर्ववज्जन्तुजातस्य शिवधामफलप्रदाः ।
पराः प्रकथितास्तज्ज्ञैरघोरा शिवशक्तयः ॥

मा० वि० तं० ३-३३ दृश्यतां च—शि० सू० वा०—३-१९ इति ।

**—लोके** परमेश्वरस्य ईशनाख्यायाः शक्तेरुद्भूताः जगत्सञ्चा-

लने प्रवृत्ताः प्रतिजीवमधिष्ठिता असंख्याताः देव्यः जनान् मोक्षमार्गे प्रवर्तयन्त्यः। उक्तं तथा—

तदाऽघोराः परा देव्यो जाताः शैवाध्वदैशिकाः। (तं० आ० ३-७३)

**मातृकाक्रमे (क)** इकाराभिव्यंग्यायाः परमेश्वरस्येच्छाशक्तेः प्रसृता मोक्षदायिन्यः शक्तयः। तदुक्तम् –

इच्छाशक्तिरघोराणां शक्तीनां सा परा प्रभुः। (तं० आ० ३-७२)
प्रभुः=प्रभवा=निमित्तम। (तं० आ० वि० खं० २-पृ० ८३)

**(ख)** अकारादिविसर्गान्ताः षण्ठवर्जं या द्वादशवर्णकलास्ताभियंतः शिवशक्तयो व्यंग्या भवन्ति मातृकोपासनक्रमे ततस्ता वर्णकलास्तत्र क्रमे द्वादशकाल्य इति स्वीक्रियन्ते। ताश्च निर्मलाः शुद्धाश्च सत्योऽघोराः शिवशक्तय इत्यङ्गीक्रियन्ते तत्र। सकलप्राणिष्वधिष्ठिता याऽघोराख्या देव्यस्तासां सर्वोऽपि व्रातः एताभ्य एव मातृकाशक्तिभ्यः समुदेति। उक्तं तथा—

ता एव निर्मलाः शुद्धा अघोराः परिकीर्तिताः। तं० आ० ३-२५७।

एवमन्येऽपि घोरघोरतराख्याः शक्तयो व्रातरूपेणावस्थिताः सत्य एताभ्य एव द्वादशशक्तिभ्यः प्रजायन्ते।

**अज्ञानम (अर्थतः)** ज्ञानाभावस्तु नात्राज्ञानं यत् संसृतेः कारणम्। तस्य जडेष्वपि सत्त्वात्, न च जडानां संसृतिः। ततोऽल्पार्थकोऽत्र नञ्, तेनाल्पं संकुचितं ज्ञानमज्ञानम्। उक्तमेतत् –

अज्ञानमिति न ज्ञानाभावश्चातिप्रसङ्गतः।
स हि लोष्ठादिकेऽप्यस्ति न च तस्यास्ति संसृतिः॥
अतो ज्ञेयस्य तत्त्वस्य सामस्त्येनाऽप्रथात्मकम्।
ज्ञानमेव तदज्ञानं शिवसूत्रेषु भाषितम्॥
(तं० आ० १-२५, २६)

**—पौरुषम्** मलरूपं स्वात्मावरणम्। स्वात्मविषये स्व-

शक्तिविषये च दृढः सङ्कुचितत्वस्याभिमानः, संस्काररूपतया सततप्रवहणशीलः । अविकल्पोऽयमसद्विश्वासश्चैत्रोऽहममुकामुकविषयज्ञस्तत्तन्मात्रकरणे समर्थः इति । तदुक्तम्—

तत्र पुम्सो यदज्ञानं मलाख्यं तज्जमप्यथ ।
स्वपूर्णचित्क्रियारूप-शिवतावरणात्मकम् ॥
सङ्कोचिद् विक्रियारूपं तत् पशोरविकल्पकम् ।
(तं० आ० १-३७, ३८)

दृश्यतां च (तं० सा० पृ० ३) इति ।

—**बौद्धम्** स्वात्मविषये जगद्विषये च बुद्धिगतोऽनिश्चयो वा विपरीतनिश्चयो वाऽशुद्धविकल्पज्ञानात्मकः । अहं स्थूलस्तृषितः सुखी, सुखादिराहित्येन शान्तो वेत्यादिरूपो विकल्पज्ञानात्मकोऽध्यवसायो निश्चयश्च, प्रमेयांशविषये च इदं सुखमिदं नीलमियंतृप्तिरियं शान्तिरित्यादिरूपा वा निश्चयाः, इति सर्वमेवंविधं बौद्धमज्ञानम । अशुद्धो विकल्पः । तदुक्तम्—

द्विविधञ्चाज्ञानम्, बुद्धिगतं पौरुषञ्च । तत्र
बुद्धिगतमनिश्चयस्वभावं, विपरीतनिश्चयात्मकञ्च ।
(तं० सा०, पृ० २,३)

अहमित्थमिदं वेद्मीत्येवमध्यवसायिनी ।
षट्कञ्चुकाविलाणूत्थप्रतिबिम्बनतो यदा ॥
धीर्जायते तदा तादृग्ज्ञानमज्ञानशब्दितम् ।
बौद्धं .. ... ... ... .. .. ॥
(तं० आ० १-३९, ४०)

—**मूलतः** आणवं मलमेव मूलतोऽज्ञानम्, इतरस्य ज्ञानसङ्कोचजातस्य तदाश्रितत्वात् । उक्तमतः—

मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ।
(मा० वि० तं० १-२३)

—**विस्तरतः** (१) अपूर्णे जडे च देहादौ स्वात्मताभिमानः ।

(२) अल्पशक्तित्वाभिमानः स्वात्मविषये । (३) भेददर्शित्वम् । (४) कर्मकर्तृत्वे सङ्कोचसम्भिन्नोऽभिमानः । (५) तदाश्रितस्तदनुगुणश्च कर्मसंस्कारः । (६) स्वात्मरूपे जगत्यनात्मतादर्शनम् । (७) सङ्कुचिता ममता । इत्यादि । तदुक्तम्—

(१) अज्ञानं बन्धः (शि० सू० १-२) ।

(२) द्वैतप्रथा तदज्ञानं तुच्छत्वाद् बन्ध उच्यते । (तं० आ० १-३०)

(३) यदनात्मन्यपि तद्रूपावभासनं तत् पुरा निराकृत्य ।
आत्मन्यनात्मरूपां भ्रान्तिं विदलयति परमात्मा ॥
(प० सा० ३९)

दृ० (स्पं० वि० पृ० ११८) इत्यपि ।

दृश्यतां च **आणवो मलः, कार्मो मलः, मायीयो मलः** इति च । सर्वमप्येतदज्ञानविस्तारमयमेव ।

**अणुः (उच्चारयोगे)** खदशके द्वितीयं खम् । करणगणपरिशून्यः सङ्कुचितः प्रमाता केवलः । तदुक्तम्—

आत्माणुकुलमूलानि ... ... ... ।
एतत् खं दशधा प्रोक्तमुच्चारोच्चारलक्षणम् ॥
(तं० आ० ५-९३, ९४)

**—तत्त्वतः** शिव एव स्वेच्छया स्वात्मानं सङ्कुचितमवभास्य तथा स्थितः, तथावभासमानोऽपि च न शिवादन्यः । उक्तं तथा—

अणवो नाम नैवान्यत् प्रकाशात्मा महेश्वरः ॥
चिदचिद्रूपताभासी पुद्गलः क्षेत्रवित् पशुः ।
(तं० आ० ९-१४४, ४५)

**—व्यवहारे** परिमितः प्रमाता, जीवः, पुद्गलः, पुरुषः, देही, समलो मायीयः प्रमाता । देहप्राणबुद्धिशून्यान् जडान् पदार्थान् स्वात्मत्वेनाहमित्यभिमन्वानः कञ्चुकषट्कपरिच्छिन्नो वेदकतया स्थितो मितः प्रमाता । तदुक्तम्—

देहपुर्यष्टकाद्येषु वेद्येषु किल वेदनम् ।
एतत्षट्कससंकोचं यदवेद्यमसावणुः ॥
(तं० आ० ९-२०५)

दृश्यताम्—(ष० त० सं० पृ० ५) इत्यपि ।

**अनादरविरक्तिः** अभिनवगुप्तस्य गुरोः श्रीशम्भुनाथस्येयं मतिर्यद् बलात्कारेण विषयेभ्यो निरुद्धेष्विन्द्रियेषु बहुधा अवाञ्छनीयाः प्रतिक्रियाः सञ्जायन्ते । शैवयोगाभ्यासोपायतः पुनर्यदा योगी स्वात्मसाक्षात्कारस्यानन्दं मनागपि रसयति तदा तस्य योगिनश्चेतसीन्द्रियेषु च विषयेभ्यः स्वाभाविकी विरक्तिः स्वयमेवोपजायते, यतः स्वस्वरूपसाक्षात्काररसस्य पुरतः विषयसुखं तस्य कृते नीरसतामेवोपैति । सैषाऽनायाससिद्धा विषयविरक्तिरेवानादरविरक्तिः । विषयसुखस्य तत्रानादरदृष्ट्यैव दृश्यमानत्वात । उक्तमेतत् ।

(क) तथा हि गुरुरादिक्षद् बहुधा स्वकशासने ॥
अनादरविरक्त्यैव गलन्तीन्द्रियवृत्तयः ।
यावत्तु विनियम्यन्ते तावत्तावद्विकुर्वते ॥
(मा० वि० वा० २-१११-११२)

(ख) स्वं पन्थानं हयस्येव मनसो ये निरुन्धते ॥
तेषां तत्खण्डनायोगाद् धावत्युत्पथकोटिभिः ।
(तदेव—२-१०९, ११०)

**अनुग्रहः** जीवानां मोक्षस्य मूलकारणात्मिका परमेश्वरी कृपा । तदुक्तम्—एष चानुग्रहलक्षणोऽन्त्यः पञ्चमः पारमेश्वरः कृत्यविशेषः परपुरुषार्थप्रापकः, तन्निबन्धनत्वात् परमार्थमोक्षस्य । (ई० प्र० वि० खं०-१, पृ० ११)

**—अवरः परश्च** शिवेनैव कृतोऽनुग्रहः परोऽनुग्रहो यो ज्ञानमोक्षप्रदः । शिवादवरेण केनापि देवेन कृतोऽनुग्रहोऽवरः । नासौ साक्षान्मोक्षस्य दाता । तदुक्तम्—

वैष्णवादीनां तु राजानुग्रहवन्न मोक्षान्तता। (तं० सा० पृ० १२४)
अत एव गुरुभूयस्त्वमुपदिष्टं शैवे।

**—कृत्यपञ्चके** सृष्टि-स्थिति-संहार-पिधान-अनुग्रहाः इति पञ्च कृत्यानि परमेश्वरस्य। तत्रानुग्रहः पञ्चमं चरमं च कृत्यम्। अत एवोक्तम् –

सृष्टिसंहारकर्तारं विलयस्थितिकारकम्।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम्॥
(स्व० तं० १-३)

**—तीव्रः** = दृश्यताम् **शक्तिपातः (तीव्रः)** इति।

**—मध्यः** = दृश्यताम् **शक्तिपातो (मध्यः)** इति।

**—मन्दः** = दृश्यताम् **शक्तिपातो (मन्दः)** इति।

**—शिवस्य स्वभावः** निजस्वभावादेव शिवः कृत्यपञ्चककारी। ततोऽनुग्रहशीलता तस्य स्वाभाविकी, न कारणान्तरमपेक्षते। तस्य पारमैश्वर्यायाः लीलायाश्चरममिदमङ्गम्। तदुक्तम्—

(क) स्वेच्छयैव भगवन् निजमार्गे कारितः पदमहं प्रभुणैव।
(शि० स्तो० ४-१०)

(ख) एष चानुग्रहलक्षणोऽन्त्यः पञ्चमः पारमेश्वरः कृत्यविशेषः परपुरुषार्थप्रापकः। (ई० प्र० वि० ख० १ पृ० ११)

**अनुग्रहस्य कर्माद्यनपेक्षता** अनुग्रहशक्तिपातो हि कर्माणि नाशयति पर्यन्ते। ततः कर्मनाशकत्वान्नास्य कर्मापेक्षत्वम्। ततोऽनुग्रहः केवलं परमेश्वरेच्छाधीनः। तदुक्तम् —

यत्तु कस्मिँश्चन शिवः स्वेन रूपेण भासते॥
तत्रास्य नाणुगे तावदपेक्ष्ये मलकर्मणी।
अणुस्वरूपताहानौ तद्गत हेतुतां कथम्॥
व्रजेन्मायानपेक्षत्वमत एवोपपादयेत्।
(तं० आ० १३-११४ तः ११६)

**—कारणम्** शैवसिद्धान्तादौ प्रतिपादितानि कर्मसाम्यादीनि न शिवकृतस्यानुग्रहस्य कारणानि, तेषामपि कारणान्तरजन्यत्वात्, तर्कदोषबहुलत्वाच्च । ततः शिवस्य स्वातन्त्र्यमेवानुग्रहकृत्यस्य कारणम् । तदुक्तम् –

अनिमित्तस्तथा चायं शक्तिपातो महेशितुः ।

(मा० वि० वा० १-६८८)

दृश्यतां च **शक्तिपातस्य कारणम्** इति ।

**—प्रकाराः** दृश्यताम्–**शक्तिपातस्य प्रकाराः** । इति ।

**—भावनाङ्गत्वम्** योगी जडं विषयं ज्ञानेनावभासयन तं प्रकाशाभेदमापादयंस्तदुपरि क्रियमाणां स्वामनुग्रहलीलामेव भावयति तत्र, तया च भावनया सम्यगभ्यस्तया स्वं परमेश्वरत्वमुद्द्योतयति । उक्तमेतत्—देहप्राणादिपदमाविशंश्चिद्रूपो महेश्वरो बहिर्मुखीभावावसरे नीलादिकमर्थं नियत-देश-कालादितया यदाभासयति तदा ... ... ... ... प्रकाशैक्येन प्रकाशनेऽनुगृहीतता । (प्र० हृ० पृ० २३)

**—वैचित्र्यम्** अनुगृहीतोऽपि साधकः तीव्रगत्याऽग्रे न सरति । असौ कदाचिदविश्वस्ततामपि याति गुरुं, मन्त्रं, दीक्षां च प्रति । तेन परिभ्राम्यते मायीये मोहे पुनरपि । अनन्तरं पुनरनुगृह्यते तीव्रतया, येन मोक्षमार्गेऽग्रेसरो भवति । अनुग्रहकृत्यस्य लीलात्मकत्वमेवैतद् वेद्यं सुधीभिः । अवैचित्र्ये नेयं क्रीडाऽभविष्यत् । तदुक्तम्—

१, शक्तिपातसमये विचारणं प्राप्तमीश न करोषि कर्हिचित् ।
अद्य मां प्रति किमागतं यतः स्वप्रकाशनविधौ विलम्बसे ॥

(शि० स्तो० १३-११)

सुखासुखयोर्बहिर्मननम् । (शि० सू० ३-३४) मोहप्रतिसंहतस्तु कर्मात्मा । (तदेव ३-३६) अभिलाषाद् बहिर्गतिः सम्बाह्यस्य (तदेव ३-४१) । एतेषां सूत्राणां व्याख्याः विमृष्टव्याः ।

—(६) **वैचित्र्ये कारणम्** शिवः स्वातन्त्र्येण जीवेष्वनुग्रहं वा निग्रहं वा करोति पारमेश्वरीं क्रीडामभिनयन्। अनुग्राह्येष्वपि तीव्रं वा, मध्यं वा, मन्दं वेत्यादिरूपतया बहुप्रकारकवैचित्र्ययुतमनुग्रहं करोति। तद्वैचित्र्ये तस्य स्वातन्त्र्यमेव कारण नान्यत् किमपि, कारणत्वेनाभिमतस्यापि भक्तिभावादेः कर्मसाम्यादेर्वा कारणान्तरोत्थत्वान्मूलतः पारमेश्वरस्वातन्त्र्यकारणत्वाच्च। तदुक्तमेतत् संक्षेपतः—

स च स्वाच्छन्द्यमात्रेण तारतम्यप्रकाशकः।
(तं० आ० १३-११७)

विस्तरतश्च द्रष्टव्यम्—(मा० वि० वा० १-६८९ तः ६९२, ६९७,६९८) इति।

**अनुग्रहे स्वातन्त्र्यम्** शिवस्य स्वातन्त्र्यं विहाय न किमपि तस्यानुग्रहस्य कारणम्। स्वतन्त्रया स्वेच्छया यस्मिन् कस्मिन्नपि जनेऽनुग्रहं करोति शिवः, तीव्रं वा करोति, मध्यं वा, मन्दमपि वा। अतएवोक्तम्—

तेन शुद्धः स्वप्रकाशः शिव एवात्र कारणम।
(तं० आ० १३-११६)
अनिमित्तस्तथा चायं शक्तिपातो महेशितुः॥
(मा० वि० वा० १-६८८)

**अनुपायः** आनन्दोपायः। आनन्दयोगः। क्रियाज्ञानेच्छायोगाभ्यासान् बिनैव स्वत एव वा, सिद्धजनदर्शन-स्पर्शन-चरुदानादि-मात्रेण वा, गुरूपदेशमात्रतो वा, एवमेवोदीयमानः स्वस्वरूपसाक्षात्कारः। तदुक्तम्—

ततोऽपि परमं ज्ञानमुपायादिविवर्जितम्।
आनन्दशक्तिविश्रान्तमनुत्तरमिहोच्यते॥
(तं० आ० १-२४२)

एषां न मन्त्रो न ध्यानं न पूजा नापि कल्पना।

न समय्यादिकाचार्यपर्यन्तः कोऽपि विभ्रमः ॥
(तदेव २-३७)

नास्य मण्डलकुण्डादि किञ्चिदप्युपयुज्यते ।
न च न्यासादिकं पूर्वं स्नानादि च यथेच्छया ॥
(उद्धरणं तं० आ० वि० खं० १/२. पृ० ३५)

दृश्यतां च (शि० दृ० ७-५, ६)

दृश्यतां च **प्रातिभं ज्ञानम्** इति

**अनुपायता** सकृदुपदेशमात्रतः स्वरूपसाक्षात्कारे सम्पन्ने सति पुनरुपदेशाभ्यासादेरनपेक्षता । उक्ता यथा —

उपायैर्न शिवो भाति भान्ति ते तत्प्रसादतः ।
स एवाहं स्वप्रकाशो भासे विश्वस्वरूपकः ॥
इत्याकर्ण्य गुरोर्वाक्यं सकृत् केचन निश्चिताः ।
विनाभूयोऽनुसन्धानं भान्ति संविन्मयाः स्थिताः ॥
(उद्धरणम् — तं० आ० वि० खं० १/२ पृ० ३)

अनुपायं हि यद्रूपं कोऽर्थो देशनयात्र वै ।
सकृत् स्याद् देशना पश्चादनुपायत्वमुच्यते ॥
(तं० आ० २-२)

**अनुपायनिष्ठस्य दृष्टिः** अनुपायनिष्ठो योगी सर्वमपि वस्तुजातं संविद्रूपतायां विलापितमिव विमृशति "अहम्" इति। बाह्यव्यवहारेऽपि तस्य स्वात्मशिवत्वदृष्टिः सर्वत्र विकसन्त्येव दीव्यति। तदुक्तम् —

यथा रुमायां पतिता काष्ठपर्णोपलादयः ।
लवणत्वाय कल्पन्ते तथा भावाश्चिदात्मनि ॥
(उद्धरणम. तं० आ० वि० खं० १/२ पृ० ३०)

तेषामिदं समाभाति सर्वतो भावमण्डलम् ।
पुरः स्थमेव संवित्तिभैरवाग्निविलापितम् ॥
(तं० आ० २-३५)

एषैव शिवदृष्टिः श्रीसोमानन्दनाथस्य,
प्रत्यक्षाद्वैतदृष्टिश्च श्रीनरसिंहगुप्तस्य ।

**—शेषवर्तनम्** असावुपदेश-दीक्षा-ग्रन्थनिर्माणादिभिः परोपकारमात्र करोति तेन नान्यत् किमपि समयाचार-पूजन-जप-होम-धारणादि कर्तव्य भवति । तदुक्तम्—

समस्तयन्त्रणातन्त्र-त्रोटना टङ्क-धर्मिणः ।
नानुग्रहात् परं किञ्चिच्छेषवृत्तौ प्रयोजनम् ।।
(तं० आ० २-३८)

अत एव चास्य स्वात्मनि कृतकृत्यत्वात् परानुग्रहार्थमेव वर्तनम् । (तं० आ० वि० खं० १/२. पृ० ३१)

**अनुपायस्य अधिकारी** (क) तीव्रेण शक्तिपातेन पवित्रीकृतसंवित् साधकोऽनुपायदेशनाधिकारी सामान्यतः । उक्तं हि—

नानिर्मलचितः पुंसोऽनुग्रहस्त्वनुपायकः ।
(तं० आ० २-४७)

(ख) योगसिद्धसद्गुरुकृपाकटाक्षितोऽनिर्मलसंविदपि कदाचिदनुपाययोगदीक्षापात्रतां याति, परं तस्मै संवित्नैर्मल्यसम्पादनाय पूर्वमाणवादिदेशना विधीयते ततोऽनुपायदेशना । तदुक्तम्—

सोऽपि स्वातन्त्र्यधाम्ना चेदप्यनिर्मलसंविदाम् ।
अनुग्रहं चिकीर्षुस्तद्भाविनं विधिमाश्रयेत् ।।
अनुग्राह्यानुसारेण विचित्रः स च कथ्यते ।
पराषराद्युपायौघ-सङ्कीर्णत्वविभेदतः ।
तदर्थमेव चास्यापि परमेश्वररूपिणः ।
तदभ्युपायशास्त्रादि-श्रवणाध्ययनादरः ।।
(तदेव० २-४४ तः ४६)

**—देशना** स्पष्टमेव प्रतिपादिता । तद्यथा—

नीलं पीतं सुखमिति प्रकाशः केवलं शिवः ।
अमुष्मिन् परमाद्वैते प्रकाशात्मनि कोऽपरः ।।
उपायोपेयभावः स्यात् प्रकाशः केवलं हि सः ।
(तं० आ० २-१६, १७)

यथा स्थितस्तथैवास्स्व मा गा बाह्यमथान्तरम् ।
केवलं चिद्विकासेन विकारनिकराञ्जहि ।।
(उद्धरणम् —तं० आ० वि० खं० १/२ पृ० २७)
उपायजालं न शिवं प्रकाशयेद्
घटेन किं भाति सहस्रदीधितिः ।
विवेचयन्नित्थमुदारदर्शनः
स्वयम्प्रकाशं शिवमाविशेत् क्षणात ।।
(तं० सा० पृ० ९)

**—योगत्वम्** तद्धि स्वात्मपरशिवयोरैक्यस्य स्फुटीभाव-मात्रम् । तथाविधस्यैकत्वस्यैव मालिन्यां योगलक्षणत्वेनोक्तत्वात् । उक्तं हि—

योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना ।
(मा० वि० तं—४-४)

**—विधिः** (क) पारमेश्वरेणानुग्रहेण पूतः शिष्यो यदैवानु-पायदेशनासमर्थं गुरुम् "अयमनुपायसाक्षात्कारवान् सशरीरः शिव एव" इत्यनया दृष्ट्या पश्यति तदासावपि गुरुदर्शनमात्रेण विनाप्यभ्यासप्रपञ्चं सद्य एव स्वात्मसाक्षात्कारवान् सञ्जायते, यतोऽसौ प्रागेव निर्मलसंवित् । तदुक्तम्—

तं ये पश्यन्ति ताद्रूप्यक्रमेणामलसंविदः ।
तेऽपि तद्रूपिणस्तावत्येवास्यानुग्रहात्मता ।।
(तं० आ० २-४०)

(ख) कृपार्द्रचित्तो गुरुरनिर्मलसंविदमपि शिष्यमनुपायविधिमुपदे-देष्टुमलम् । (तं० आ० २-४४ तः ४६ उपरि)

**अपोहनशक्तिः** अभिन्नेऽखण्डे च विश्वात्मके बोधगगने बहुप्रकारकस्य विच्छेदनस्यावभासनं प्रत्यौन्मुख्यस्य सम्पादनकरी पारमेश्वरी शक्तिः। यदुक्तम्—

यत किल तदाभास्यते तत् संविदो विच्छिद्यते, सविच्च ततः, संविच्च संविदन्तरात्, संवेद्यं च संवेद्यान्तरात्। न च विच्छेदन वस्तुतः सम्भवति, इति विच्छेदनस्यावभासमात्रमुच्यते। ... ... ... ... ... तदवभासनसामर्थ्यमपोहनशक्तिः। ई० प्र० वि० खं० १ पृ० ११०)

भेदः कथं नु पूर्णे भाति तु विच्छेदभासनान्नूनम्।
सेयमपोहनशक्तिः शम्भोर्विच्छेदभासनोन्मुखता॥
(स्वा० द० ३-३०)

**अभिनवगुप्तः** काश्मीरशैवदर्शनस्य प्रयोगपक्षे सिद्धान्तपक्षे चोभयत्र "यथोत्तरं मुनीनां प्रामाण्यम्" इतिन्यायानुसारं सर्वोत्तीर्णं प्रामाण्यं भजमानो गुरुः। अस्य निर्णयः पक्षद्वयेऽपि चरमः।

**अभिनवगुप्तस्य कालः** ख्रिस्त-दशमशताब्दिमध्येऽस्य जन्म, एकादशशताब्दिमध्ये च शिवत्वगतिः। ग्रन्थत्रयेऽनेन स्वयं निर्माणकालो निर्दिष्टः सप्तर्षिसंवत्सरानुसारम्। तद्यथा—

(क) षट्षष्टिनामके वर्षे ... ... ... ... । (क्र० स्तो – ३०)
स च कालः ४०६६ सप्त० संव० ९९० ख्रिस्त० वर्ष इति।

(ख) वसुरसपौषे कृष्णदशम्याम् ... ... ... । (भै० स्तो – १०)
स च कालः ४०६८ सप्त० सं० ; ९९२ ख्रि० वर्ष इति।

(ग) इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे।
तिथिशशिजलधिस्थे ... ... ... ... ।
(ई० प्र० वि० वि० खं० ३ पृ० ४०९)

स च कालः=४०९० सप्त. सं, ४११५ कलि सं० १०१४ ख्रि. वर्ष इति।

अस्य शैशवं कौमारं वा तदाभूद् यदोत्पलदेवः सशरीरोऽवर्ततात्र लोके। तेनैव स्वशिष्यस्य लक्ष्मणगुप्तस्य पादयोरयं घटितः प्रत्यभिज्ञाशास्त्रदीक्षाविषये। तदुक्तम्—

श्रीशास्त्रकृद्घटितलक्ष्मणगुप्तपाद-
मत्योपदर्शितशिवाद्वयवाददृप्तः।
(ई० प्र० वि० वि० खं० ३. पृ० ४०६)

(घ) सिद्धसम्प्रदाये मौखिकी या परम्परा तदनुसारमभिनवगुप्तस्य जन्म ९८१ तमे वैक्रमे संवत्सरे, तदनुसारं ९२४ तमे खृस्ते वर्षे समभवत्।

## —गुरवः—

## —(क) शैवशास्त्रे—

**(१) अर्द्धत्र्यम्बके शैवे** -श्री शम्भुनाथः, काङ्गडायां जालन्धरपीठे पीठाधिपः। कौलत्रिकोभयरहस्यपारज्ञतः। अभिनवगुप्तस्य हृदये स्थितानां सर्वासामपि शङ्कानामपनेता सिद्धान्तपक्षेऽपि प्रयोगपक्षेऽपि। तदुक्तम्—

तुर्याख्यसन्ततिमहोदधिपूर्णचन्द्रः
श्रीसोमतः सकलवित् किल शम्भुनाथः।
(तं० आ० ३७-६१)

दृश्यतां च **शम्भुनाथः** इति।

—**(२) आमर्दके शैवे** एरकनाथपुत्रः श्रीवामनाथः। तदुक्तम्—

आमर्दसन्तति-महार्णव-कर्णधारः
सद्दैशिकैरकवरात्मजवामनाथः। (तं० आ० ३७-६०)

—**(३) कालीनये** उद्भटः चक्रभानोः परम्परायामाविर्भूतः। तदुक्तम्—

श्रीमदुज्जटोद्भटादिनानागुरुपरिपाटी सन्ततिर्यत्प्रसादासादितमहिमभिरस्मा-

भिरेतत् प्रदर्शितम् (उद्धरणं क्रमकेलितः - तं० आ० वि० खं० ३, पृ० १९२)।

—(४) **कौलिके विधौ** श्री शम्भुनाथो जालन्धरपीठाधिपः। तन्त्रालोकस्यैकोनत्रिंश आह्निकेऽनेकधा तस्यैव नाम्नः कीर्त्तनात्। तदेवाह्निकं कौलिकविधिप्रतिपादकम्। तदुक्तम्—

अथ सप्रत्ययां दीक्षां वक्ष्ये तुष्टेन धीमता।
शम्भुनाथेनोपदिष्टां दृष्टां सद्भावशासने ॥
(तं० आ० २९-२११, १२)
इति दीक्षोत्तरे दृष्टो विधिर्मे शम्भुनोदितः ॥
(तदेव--२४३)

—[५] **तुर्याख्यसन्ततिरूपे शैवे** श्रीशम्भुनाथः। अर्द्धत्र्यम्बकसन्ततिरेव हि तुर्याख्यासन्ततिः। तदुक्तम्—

तुर्याख्यसन्तति-महोदधिपूर्णचन्द्रः
श्रीसोमतः सकलवित किल शम्भुनाथः ॥
(तं० आ० ३७-६१)

—[६] **त्रिकप्रक्रियासु** तासु बहवोऽस्य गुरवस्ते च—लक्षमणगुप्तः, शम्भुनाथः, भूतिराजः, महेश्वरः, भट्टेन्दुराजः, वामनदत्ताचार्यः, धर्मशिवः, भास्करः इत्याद्याः। तदुक्तम्—

अन्येऽपि धर्मशिववामनकोद्भटश्रीभूतेशभास्करमुखप्रमुखा महान्तः।
(तं० आ० ३७-६२)

वर्णमालाक्रमानुसारमेतेषां परिचयस्तत्र तत्र द्रष्टोऽवलोकनीयः।

—[७] **त्र्यम्बकीये शैवे** लक्ष्मणगुप्तोऽस्य गुरुः, उत्पलदेवः परमगुरुः, सोमानन्दः परमेष्ठी गुरुः। तदुक्तम्—

त्रैयम्बकप्रसर-सागर-शायि-सोमानन्दात्मजोत्पलज-
लक्ष्मणगुप्तनाथः। (तं० आ० ३७-६१)

सोमानन्दात्मज इति तस्य शिष्यः, उत्पलज इति तस्य शिष्यः। पुत्रकदीक्षया दीक्षितः शिष्योऽपि पुत्र इत्युच्यते त्रिकक्रमे ।

—[८] **प्रत्यभिज्ञाशास्त्रे** लक्ष्मणगुप्तः। तदुक्तम्—

श्रीमल्लक्ष्मणगुप्तदर्शितपथः श्रीप्रत्यभिज्ञाविधौ ।

(ई० प्र० वि० वि० खं० १. पृ० १)

—[९] **मतङ्गशास्त्रे** मातङ्गपारमेश्वरागमो मतङ्गशास्त्रम् । तत्रास्य गुरुराचार्यानिरुद्धः । तदुक्तम्—

तस्मात् कर्मेन्द्रियाण्याहुस्तवग्वद् व्याप्तृणि मुख्यतः ॥

तत् स्थाने वृत्तिमन्तीति मतङ्गे गुरवो मम ।

(तं० आ० ९—२६०, ६१)

श्रीमतङ्गशास्त्रव्याख्यातारः श्रीमदनिरुद्धप्रभृतयः ।

(तं० आ० वि० खं० ६. पृ० २१०)

एते साक्षादुपदेशेन किमस्य गुरवः, शास्त्रव्याख्यातृत्वेन वाऽऽदरार्थं "गुरवो मम" इत्युक्ताः इति न निश्चेतुं शक्यते ।

—[१०] **श्रीनाथीये शैवे** भट्टभूतिराजपुत्रो भट्टेन्दुराजः । तदुक्तम्—

श्रीनाथसन्तति-महाम्बर-घर्मकान्तिः ।

श्रीभूतिराजतनयः स्वपितृप्रसादः ॥

(तं० आ० ३७-६०)

## —[ख] शैवेतरेषु शास्त्रेषु

—[१] **भगवद्गीतासु** भट्टेन्दुराजः। तदुक्तम्—

भट्टेन्दुराजादाम्नाय विविच्य च चिरं धिया ।

कृतोऽभिनवगुप्तेन सोऽयं गीतार्थसंग्रहः ॥

(गी० सं० पृ० २)

—[२] **व्याकरणादौ** व्याकरण-न्याय-साहित्यादावस्य पिता नरसिंहगुप्त एव गुरुः। तदुक्तम्—

पित्रा स शब्दगहने कृतसम्प्रवेश-
स्तर्कार्णवोर्मि-पृषतामल-पूतचित्तः ।
साहित्य-सान्द्ररसभोगपरो महेश-
भक्त्या स्वयंग्रहणदुर्मदया गृहीतः ।। (तं० आ० ३७-५८)

अलङ्कारशास्त्रेऽस्य गुरुर्भट्टेन्दुराजोऽपि, नाटयशास्त्रे च भट्टतौतोऽपीति सुविदितमेव सुधियाम् ।

–[३] विविधेषु शास्त्रेषु श्रीचन्द्रशर्मादयः । तदुक्तम्—

श्रीचन्द्रशर्म-भवभक्ति-विलासयोगा-
नन्दाभिनन्द शिवशक्तिविचित्रनाथाः ।
तं० आ० ३०-६२)

–ग्रन्थाः

–(क) टीकात्मकाः

– १. कालीनये क्रमकेलिः (इदानीमलभ्या) ।

– २. त्रिकसधानाविषये परात्रीशिकाविवरणम् ।

– ३. प्रत्यभिज्ञाशास्त्रे (१) ईश्वरप्रत्यभिज्ञाविमर्शिनी ।
(२) ईश्वरप्रत्यभिज्ञाविवृति-
विमर्शिनी ।

–(ख) मौलिका ग्रन्थाः

– १. आगमशास्त्रविषये मालिनीविजयवार्तिकम् ।

–त्रिकसाधनाविषये (१) तन्त्रालोकः (२) तन्त्रसारः ।

– ३. शास्त्रप्रवेशप्रयोजनाः (१) अनुत्तराष्टिका । (२) परमार्थचर्चा । (३) परमार्थसारः । (४) बोधपञ्चदशिका ।

–स्तोत्रग्रन्थाः (१) अनुभवनिवेदनस्तोत्रम् । (२) क्रम-

स्तोत्रम् । (३) देहस्थदेवताचक्रस्तोत्रम् । (४) भैरवस्तोत्रम् ।

**—विनष्टाः ग्रन्थाः**

**—१. कालीनये** (१) क्रमकेलिः (क्रमस्तोत्रस्य व्याख्या)

**—२. त्रिके** पूर्वपञ्चिका नाम मालिनीविजयतन्त्रस्य पूर्वभागस्य व्याख्या ।

**—३. प्रत्यभिज्ञाशास्त्रे** (१) अजड-प्रमातृ-सिद्धि-विमर्शिनी, (२) ईश्वरसिद्धिविमर्शिनी, (३) शिवदृष्टयालोचनम् । (४) सम्बन्धसिद्धि-विमर्शिनी ।

**—४. विनष्टनामानो ग्रन्थाः** स्वकीयेषु ग्रन्थेषु तेनैवंविधेभ्योऽपि ग्रन्थेभ्य उद्धरणानि प्रदत्तानि येषां ग्रन्थानां नामोल्लेखो नैव कृतः । न च ते श्लोकाः विद्यमानेषु ग्रन्थेषु लभ्यन्ते ।

**—(घ) शास्त्रान्तरेषु ग्रन्थाः** तेष महत्त्वशालिनौ तावत् नाट्यशास्त्रटीका (अभिनवभारती), ध्वन्यालोक-लोचनं च । अन्येऽपि केचन विद्यन्ते, केषाञ्चन च नामोल्लेखमात्रं लभ्यते ।

**—निवासस्थानम्** तस्य गृहं श्रीनगरे, वितस्तायास्तटे, सितांशुमौलिमन्दिरस्य पुरतोऽभवत् । तन्त्रालोकस्य रचना तेन मन्द्रस्य गृहे कृता : तदुक्तम्—

तस्मिन् कुवेरपुरचारुसितांशुमौलि-
साम्मुख्यदर्शनविरूढपवित्रभावे ।
वैतस्तरोधसि निवासममुष्य चक्रे
राजा द्विजस्य परिकल्पितभूरिसम्पत् । (तं० आ० ३७-५२)

तत्र च तस्य गृहं द्राक्षारामस्य मध्ये स्थितमभूद्यत्रासौ सिंहासनस्थः सन् शिष्येभ्यो ज्ञानविज्ञानदानं कुर्वन्नभूत् । वर्णितं च तद्गेहं

केरलीयेन मधुराजेन गुरुनाथपरामर्शे सविस्तरम् । तदुक्तम्—

द्राक्षारामस्य मध्ये स्फटिकमणिमये मण्डपे चित्ररम्ये
पुष्पस्रग्धूपदीपैर्बहलपरिमले चर्चिते चन्दनाद्यैः ।
वाद्यैर्गीतैः सनृत्तैः सततमुखरिते योगिनीसिद्धसङ्घै-
राकीर्णे स्वर्णपीठे मृदुतमविलसदबद्धमुक्तावितानेः ॥
(गु० ना० प० ३)

अस्ति तावद् वर्तमानश्रीनगरस्य प्राचीनतरे भागे शारिका-पर्वतस्योदीच्यां दिशि 'गोतपूर' इति नाम्ना प्रसिद्धं स्थानम् । परं न तद्वितस्तरोधसि वर्तते, अपि तु डलह्रदात् प्रवहन्त्याः क्षुद्रनद्या उभयोस्तटयोः । एतत् सम्भाव्यते यत् कालान्तरेऽत्रिगुप्तस्य केचन वशजा तत्र गृहनिर्माणं विधायोपनिविष्टा इति । आचार्य उत्पल-देवस्तत्र गोतपुरे न्यवसदिति श्रूयते श्रीनगरे वृद्धजनपरम्परासु । सम्भाव्यते यदुत्पलदेवस्य कारणात् कालान्तरे गुप्तवंशीया अपि यदा बहुसंख्यया तत्र निवासं कृतवन्तस्तदाप्रभृति स्थानं तद् "गुप्तपुरम्" इति नाम्ना ख्यातमभवत् । तदेव च लोके 'गोतपूर' इति देशभाषायामुच्यते इति ।

**—विषये किंवदन्त्यः** दन्तकथाचतुष्टयं प्रचलितं श्रूयते-ऽभिनवगुप्तस्य विषये । एका तावदभिनवगुप्तेन साकं शङ्कराचार्य-स्य शास्त्रार्थविषयिणी कश्मीरेषु प्रसिद्धा, यदुल्लेखः शिवोपाध्याये-नापि कृतो निजायां श्रीविद्यायाम् । उभयोरप्यनयोर्भिन्नकालत्वात् कपोलकल्पितैवासौ सर्वथा । यच्च शङ्कराचार्यमन्दिरं श्रीनगरे तस्येदं नामकरणं डोगरमहाराजस्य रणवीरसिंहस्य शासनकाले केनापि शाङ्करमठाधीशेन तस्मिन् समये कृतं यस्मिन् समये बहुवर्ष-शतानि प्रतिमारहितत्वेन स्थितेऽत्र मन्दिरे वर्तमानस्य शिवलिङ्गस्य प्रतिष्ठा व्यधीयत । ततः पूर्वं मन्दिरमिदं नामद्वयेन प्रसिद्धमभूत् । हिन्दव इदं ज्येष्ठरुद्रमन्दिरं मौसुलाश्च तख्ते सुलेमानं वदन्तिस्म । ततो नानेन कोऽपि सम्बन्ध आद्यस्य शङ्कराचार्यस्य ।
द्वितीया किंवदन्ती माधवीये शाङ्करदिग्विजये वर्णितास्ति ।

तदनुसारमभिनवगुप्तः कामरूपनिवासी तांत्रिकः शाक्तभाष्यकारो ब्रह्मसूत्राणामिति कथितः । असौ किंवदन्त्यपि सर्वथाऽप्रामाणिकी कविकल्पनामात्रकल्पिता चेति बोद्धव्यम् । न हि कामरूपदेशस्थस्य कस्यापि शाक्तभाष्यकारस्य स्थितिः केनापि प्रमाणेन स्थापयितुं शक्यते ।

तृतीया दन्तकथा केनापि काव्यप्रकाशटीकाकृताऽभिनवगुप्तस्य नाम्नो व्याख्यानं विदधता स्वबुद्ध्यैव कल्पिता । नास्याः प्रामाणिकतायाः किमपि परिपोषकं वस्तु क्वाप्यन्यत्र लभ्यते । तेनाभिनवगुप्तस्य बालवलभीभुजङ्गेत्याख्या कविकपोलकल्पितैव ।

चतुर्थी किंवदन्ती कश्मीरेषु प्रचलिता यदनुसारं सशिष्येणाभिनवगुप्तेन मर्त्यजीवनान्ते गुहाप्रवेशः कृत इति । न ह्यस्यां किंवदन्त्यां किमपि लिखितं प्रमाणं क्वापि लभ्यते । न चापि गुहाप्रवेशविधिस्त्रिके वा कुले वा कौले वापि क्वापि निरूपिता वर्तते ।

अभिनवगुप्तेन निज इतिहासः स्वयं निजेषु ग्रन्थेषु वर्णितोऽस्ति । न हि तत्रैवं विधानां किंवदन्तीनां सत्यताया विषये किमपि प्रमाणं क्वापि लभ्यते । देहस्थोऽसौ साक्षाच्छिवः किमर्थं गुहाप्रवेशं कुर्वीत ।

**—६. वेषभूषाकृतिप्रभृति** स्पष्टमुक्तमत्र विषये मधुराजेन । यथा—

आनन्दान्दोलिताक्षः स्फुटकृत-तिलको भस्मना भालमध्ये
रुद्राक्षोल्लासिकर्णः कलितकचभरो मालया लम्बकूर्चः ।
रक्ताङ्गो यक्षपङ्कोल्लसदसितगलो लम्बमुक्तोपवीतः
क्षौमं वासो वसानः शशिकरधवलं वीरयोगासनस्थः ॥
जान्वासवर्तकहस्तः स्फुटपरमशिवज्ञानमुद्राक्षसूत्रो
वामश्रीपाणिपद्मस्फुरितनखमुखैर्वादयन्नादवीणाम् ।

(गु० ना० प० ५, ६)

**—७. शिष्याः** (क) अतिप्रियास्तस्य शिष्यास्त्रयो येषां

नामोल्लेखो अनेकेषु ग्रन्थेषु तेन कृतः । ते च--(१) मनोरथ-गुप्ताख्यस्तस्यानुजः, (२) कर्णः, (३) मन्द्रः इति । (ख) प्रियशिष्यास्तस्य बह्वो येषां नामोल्लेखस्तेन तन्त्रालोके सप्तत्रिंशे आह्निके ६४ तः ६९ यावत् कारिकाभिः कृतः । केषामपि प्रशसापि कृता तत्र । ते च शिष्याः—क्षेमगुप्ताद्याः पञ्च पितृव्यतनयाः । तेषां परिचयः सम्बन्धिषु प्रदत्तोऽग्रे । ६. शौरिः ७. रामगुप्तः, ८. लुम्पकः, ९. अभिनवः (अपरः) १०. वत्सलिका, ११. अम्बा चेति ।

(ग) तस्य प्रसिद्धतमः शिष्यः क्षेमराजः । असौ बहुधा स्वात्मानं तस्य शिष्यं कथयति । मधुराजेव तस्यैव प्रधानशिष्यत्वं सूचितं गुरुनाथपरामर्शे । परमाचार्येण तस्य नाम न क्वापि संकीर्तितम् । अनुमीयते यत्तस्यात्यन्तमभिमानित्वं, भट्टकल्लटादिपूर्वगुरुविद्वेषित्वं च लक्षयन्नेवाचार्यस्तदुपरि न प्रसन्नोऽभूत्, अत एव तस्य नामकीर्त्तनं न क्वापि कृतमिति । यश्च पितृव्यतनय आचार्यस्य क्षेमो, असौ क्षेमगुप्तो, न क्षेमराजः । क्षेमराजो नैव गुप्तवंशीयः । तस्य सम्बन्धो भूतिराजादित्यराजदीनां वंशेनासीन्न गुप्तवंशेनेति प्रतिभाति ।

## —८. सम्बन्धिनः

**—[क] पूर्वजाः** कान्यकुब्जदेशनिवासिनो अगस्त्यगोत्रीया विद्वांसो ब्राह्मणा अस्य पूर्वजाः । तेषां वंशे अत्रिगुप्तनामा कोऽपि सकलशास्त्रवित् पण्डितोऽभूद् यं कश्मीरनरेशो ललितादित्यः स्वकीयं देशं सादरं नीतवानष्टमे ख्रैस्ते शतके, तत्र चावासवृत्तिप्रभृतिप्रबन्धने ससत्कारं तं सुवासितवान् । तस्यैव वंशे तत्र जातोऽभिनवगुप्तः । अनुमीयते यद्वसुगुप्तो लक्ष्मणगुप्तश्चापि तद्वंशीयावेव । यतो नान्यस्य कस्यापि गुप्तवंशस्य परिचयस्तात्कालिके कश्मीरदेशे लभ्यते ।

**—[ख] वर्णास्तेषाम्** गुप्ताह्वया अभिनवगुप्तस्य पूर्वजा नैव वैश्या अपि तूत्कृष्टतरा ब्राह्मणाः । प्राचीनेषु युगेषु ग्राम-

शताध्यक्षस्य प्रशासनतन्त्रीयं नाम 'गोप्ता' इत्यभूत् । अत्रिगुप्तस्य कश्चन पूर्वजस्तथाविधः सुयोग्यः प्रभावशाली च गोप्ताऽभूद् येन तद्वंशीयाः अग्रे सर्वेऽपि 'गोप्ता' इत्युपनामभाजोऽभवन् लोकप्रसिद्धौ । तथाविधो गोप्तैवात्रिगुप्तः । "गोप्ता" इत्यस्य पदस्यैव लौकिके प्रयोगे विकृतिरूपतामायाते सति "गुप्तः" इति रूपं लोके प्रचलितम् । तत एवासावत्रिगुप्त इति । एवंविधा एव गुप्तोपनामाना विद्वांसो ब्राह्मणाः अन्येऽप्यासन् । तद्यथा - चाणक्यो विष्णुगुप्तः, गणितशास्त्रगुरुर्ब्रह्मगुप्तः । समुद्रगुप्तस्य पिता चन्द्रगुप्तः । असावपि मूलतो ब्राह्मण एवाभूदिति तर्क्यते, तद्वंशस्य वाकाटकवंशेन साकं वैवाहिकसम्बन्धतः । ततोऽभिनवगुप्तस्य पूर्वजाः ब्राह्मणाः । अत एवात्रिगुप्तस्य "प्राग्र्यजन्मा" इति विशेषणम् । उक्तं यथा—

अन्तर्वेद्यामत्रिगुप्ताभिधानः लब्ध्वोत्पत्तिं प्राविशत् प्राग्र्यजन्मा ।
श्रीकश्मीरांश्चन्द्रचूडावतारैर्निःसंख्याकैः पावितोपान्तभागान् ॥
(प० त्री० वि० पृ० २८०)

**—[ग] समीपसम्बन्धिनः** अस्य पितामहो=वराहगुप्तः; पिता=नरसिंहगुप्तः, चुखलकेतिप्रसिद्धनामान्तरः; माता=विमलकला, कनीयान् भ्राता=मनोरथगुप्तः; पितृव्यतनयाः पञ्च= क्षेमगुप्तः, उत्पलगुप्तः, अभिनवगुप्तः (अपरस्तन्त्रवटधानिका निर्माता) । चक्रगुप्तः, पद्मगुप्तः इति । भगिनीप्राया=अम्बा । तस्या भ्रातरौ लुम्पको अभिनवश्चेति । अनुमानतस्त्र योऽप्येतेऽभिनवगुप्तस्य पितृव्यतनयाः वा मातुलादितनया वा । सर्वमेतद् विस्तरतो वर्णितं स्वयमेवाचार्येण । दृश्यताम् —(तं० आ० ३७—६५ तः ८१ कारिकाः)

**अभिनवगुप्तविशेषः** अयं सम्भवतो मुख्यस्याभिनवगुप्तस्य पितृव्यतनयो यस्य नाम तेन तन्त्रालोके निजशिष्यमध्ये परिगणितम् । अयमेव निर्माता तन्त्रवटधानि-

काया:,; तत्र पुष्पिकायाम् अभिनवगुप्ताचार्यविशेषविरचितत्वं यतः प्रतिपादितम्। तद्यथा—

इति श्रीमदभिनवगुप्ताचार्यविशेषविरचितायां तन्त्रवटधानिकायां तृतीयमाह्निकम्। (तं० व० धा० पृ०—१०)

**अभिषेकः आचार्यत्वे** सम्यक् प्रत्यभिज्ञातस्वरूपेण योगिना गुरुणा स्वशिष्यस्य प्रबुद्धस्य दीक्षादिक्रियाकलापसम्पादनक्षमे गुरुत्वे प्रतिष्ठापनार्थं विधेयः संस्कारविशेषोऽभिषेकः। अभिषिक्तोऽसौ पश्चादनुग्रहकरणे दीक्षाङ्गभूतया क्रियया शिष्यजनानां पाशशोधने च समर्थो भवति। तदुक्तम्—

स्वभ्यस्तज्ञानिनं साधकत्वे गुरुत्वे वाभिषिञ्चेत्।
(तं० सा० पृ० १७३) (दृश्यतां च अभिषेकाह्निकं २३ विशं तन्त्रालोके)।

**—सामान्यतः** दीक्षाकाले शिष्यस्य मन्त्रोच्चारणपूर्वकं विधेयं सौषधेन तीर्थजलेनाभिषचनम्।

**अभिषेचनम्** अभिषेक एव विशेषे कर्मणि। स च मलदाहादिक्रियाविध्यनुष्ठान-जनित-शरीर-कार्ष्य-सन्तापादि-निवारणार्थं गुरुणा मन्त्रोच्चार-पूर्वकं विधेयोऽभिषेचनविधिः शिष्यस्य। तदुक्तम्—

मन्त्रशक्तिभिरुग्राभिः शोषनिर्दहनादिभिः।
शरीरं शोष्यते ताभिस्तदर्थमभिषेचनम्॥
(स्व० तं० ४-४५०)

**अभिषिक्तो गुरुः** सामान्यतः स्वभ्यस्तज्ञानवान् योगसिद्धश्च सुप्रबुद्ध एव गुरुः शिष्याणां पाशदाहादावधिकृतो भवति। परं कदाचित्तथाविधसुप्रबुद्धाधिकारिणोऽभावे सति अस्वभ्यस्तज्ञानः प्रबुद्धमात्रोऽपि साधक आचार्यपदेऽभिषिच्यते स्वभ्यस्तविज्ञानेन समर्थेन गुरुणा, प्रतिष्ठाप्यते चाचार्यपदे। तदर्थं च साधकेन पूर्वं षड्भर्मासैर्जपहोमादिविधिविशेषोऽनुष्ठेयो भवति।

तत्पूर्त्तिवेवाभिषिक्तः सन्नभिषिक्तो गुरुरित्युच्यते । अस्याभिषिक्तत्वेनैवाचार्यत्वं न स्वभ्यस्तविज्ञानित्वेनेति तात्पर्यं परिभाषायाः । उक्तमेतत् —

सोऽभिषिक्तो मन्त्रदेवतातादात्म्यसिद्धये षाण्मासिकं प्रत्यहं जपहोमविशेषपूजाचरणेन विद्याव्रतं कुर्यात् । तदनन्तरं लब्धतन्मयीभावो दीक्षादावधिकृतः । (तं० सा० पृ० १७३)

**अर्धचन्द्रः प्रणवकला** शैव्यामुपासनायां द्वादशप्रणवकलासु पञ्चमी कला, बिन्दोरूर्ध्वं निरोध्याश्चाधः स्थिता । तदुक्तम्—

अकारश्च उकारश्च मकारो बिन्दुरेव च ।
अर्द्धचन्द्रो निरोधी च नादो नादान्त एव च ॥
(स्व० तं० ४-२५५)

**—प्रसरक्रमे** बिन्दुस्तावदीश्वरः, तस्य मूर्ध्नि यदा सृष्टिकारणभूतं शिवामृतं प्रवर्ष्यते शिवेन तदा तद्बलेन स्रष्टृत्वेन स्फुरन्नीश्वर एवार्धचन्द्रः इत्युच्यते उपासनक्रमे । तदुक्तम् —

(क) ... ... ... .. — बिन्दूश्चैवेश्वरः स्मृतः ।
(ने० तं० २१-६६)

(ख) यदा शिवामृतं मूर्ध्नि पतति सृष्टिकारणम् ॥
आप्यायस्तु भवेत्तेन सोऽर्धचन्द्र इति स्मृतः ।
(तदेव — ६६, ६७)

आप्यायकारित्वमेव चन्द्राख्यया सूच्यतेऽत्र ।

**—संहारक्रमे** बिन्दुरूपायाः ईश्वरावस्थाया उपरि नादाख्या सदाशिवावस्था । मध्ये चावस्थान्तरद्वयं । प्रथमा तयोरर्धचन्द्राख्या, द्वितीया च निरोधीतिनामिका । ईश्वरावस्थायां वेद्यप्राधान्यं सदाशिवावस्थायां च वेदकप्राधान्यम् । अर्द्धचन्द्रावस्थायां वेद्यप्राधान्यस्य किञ्चिन्मात्रमेव शैथिल्यम् अत एव वेद्यप्राधान्यसंस्कारव्यञ्जकं

कौटिल्यं तत्र, ⌒̇ इति। निरोधिन्यां तत्संस्कारशेषतामात्रमिति न तत्र कौटिल्यम्। तस्या समरेखाकारता। एवम् इति तदुक्तम्—

सर्ववाच्याभिन्नप्रकाशात्मनो बिन्दोर्नादीभवतः किञ्चिद्वाच्यप्राधान्य-शान्तावर्धचन्द्ररूपता, ततोऽपि वेद्यकौटिल्यविगमे स्पष्टरेखात्मा निरोधिका।

(वि० भै० उ० पृ० ५)

**—साक्षात्कारक्रमे** साक्षात्कारक्रमे स्वरूपस्यान्तरन्तः प्रवेश-क्रमे बिन्दोरनन्तरमर्द्धचन्द्रदशा। सा चोपास्तिक्रमे कुटिलरेखाकारतया लिख्यते ⌒ इति शारदालिप्याम्, तदधश्च स्थानं बिन्दोर्यदेवं लिख्यते ⌒̇ इति। तदुपरि च निरोधिकायाः स्थानम् एवं ⌒̇ इति शारदा-लिपिसङ्केताः।

दृश्यताम्— **संहारक्रमे** इति।

**अर्द्धचन्द्रस्य कलाः** रहस्योपायफलभूते स्वात्मसाक्षात्कारे या अर्द्धचन्द्राख्या प्रणवकला सापि सूक्ष्मतरविचार-शीलधिषणाधनैः पञ्चस्ववान्तरदशान्तरेषु विश्लिष्यते। अवान्तरदशापञ्चकं तदर्द्धचन्द्रकलापञ्चकमिति परिभाष्यते। आत्मसाक्षात्कारसोपानविशेषस्यापि पञ्चावस्थान्तराणीमानि नामनिर्देशमात्रतः उल्लिखितानि, नैव च लक्षणतो विशदीकृतानि तन्त्रालोके तद्विवेकेऽपि वा। उक्तं हि तत्र—

... ... ... एतस्य कला ज्योत्स्ना च तद्वती।
कान्तिः प्रभा च विमला पञ्चैताः ... ... ...।

(तं० आ० ८-३८३)

तद्वती = ज्योत्स्नावती इति।

(तं० आ० वि० खं० ५. पृ० २५१)

**आगमः (अर्थतः)** प्रत्यक्षादिभिः प्रमाणैरवेद्यमर्थमासमन्ताद् गमयतीति परप्रमाणात्मकः आगमः। स च लोक-शास्त्रप्रसिद्धिरूपः। तदुक्तम्—

आ समन्तादर्थं गमयतीत्यागमसंज्ञकं प्रमाण सर्वस्य तावद् भवति ।
(ई० प्र० वि० खं० २, पृ० ८२)

**—गौण:** वैखर्यात्मकशब्दमय: पुस्तकरूप: वेदसिद्धान्तादि: । अपरोक्षसाक्षात्कारात्मकस्य मुख्यस्यागमस्यानुसारित्वादेवास्यागमत्वम् । तदुक्तम्—

तथाविधे शब्दनात्मनि विमर्शे आनुकूल्यं यो भजते शब्दराशि: सोऽपि प्रमाणं, यथा वेदसिद्धान्तादि:, अन्योऽपि वा बौद्धार्हतागमादि: ... ... ... ... तत्र न विपर्यय उदेति। (ई० प्र० वि० ख० २, पृ० ८१)

**—तत्त्वत:** ऐहिकामुष्मिकभोगापवर्गफलदा वृद्धव्यवहारे याविगोता प्रसिद्धि: सैव परम्परारूपा वा शास्त्ररूपा वा वैखरीरूपशब्दनात्मकतया प्रसरन्ती आगम: । तदुक्तम्—

स एव चागमो नाम वृद्धव्यवहृतिक्रम: । (मा० वि० वा० १-७९५)

सा प्रसिद्धिरेवागम: । सा कदाचिद् दृष्टफला, 'बुभुक्षितो भुंक्ते' इति बालस्य प्रसिद्धित एव तत्र तत्र प्रवृत्ति:; नान्वयव्यतिरेकाभ्याम्, तदा तयोरभावात् । (तं० सा० पृ० १९६)

**—मुख्यत:** अपरोक्षसाक्षात्कारात्मकस्वानुभूतिसमुत्थ: स्वात्मपरमेश्वरतायाः सुस्पष्टो विमर्श एव मुख्यतयाऽऽगम: । सत्यस्यासमन्ताद् गमकत्वात् । लिखितानां शास्त्राणामुक्तानां चोपदेशानां तत एव प्रसूते: । तदुक्तम्—

आगमस्तु नामान्तर: शब्दनरूपो द्रढीयस्तम-विमर्शात्मा चित्स्वभावस्येश्वरस्यान्तरङ्ग एव व्यापार:, प्रत्यक्षादेरपि जीवितकल्प: । तेन यद् यथामृष्टं तत्तथैव । (ई० प्र० वि० खं० २. पृ० ८०)

पारमेश्वर: परामर्श एव ह्यागम इति । (म० मं० प० पृ० २२)

**—लोके प्रसिद्ध:** लोके शास्त्राणि मुख्यतया द्विवर्गाणि । वेदादिवर्गो निगम:, शैव-शाक्त-वैष्णवादिशास्त्राणि आगम: इति प्रसिद्धानि । बौद्धजैनादिशास्त्राण्यप्यागमेषु गण्यन्ते ।

**—यथार्थतः** यस्यैव हि यमागमं प्रति पूर्णतयाऽऽश्वस्तत्वं तमेव प्रति तस्य याथार्थ्येन धर्ममोक्षाद्यर्थगमकत्वम् । अविश्वस्तं प्रति नागमस्यागमकत्वम् । उक्तं हि—

तत्र न विपर्यय उदेति, तदाश्वस्तस्यैव तत्रानुष्ठानयोग्यत्वात्, अन्यस्य तु दृढप्रतिपत्तिरूपत्वाभावादप्रमाणमेव तथा विमर्शनात्मक शब्दनम् ।
(ई० प्र० वि० खं० २. पृ० ८१, ८२)

**—विशेषतः** यद्यपि सर्वा अप्यबाधिता लोकप्रसिद्धय आगमात्मिकाः, तथापि लोके विशेषतः शिवशक्तिप्रोक्तागमये शास्त्राण्यागमा इति गण्यन्ते । तदनन्तरं पाञ्चरात्रशास्त्राणामप्यागमसंज्ञत्वं प्रसिद्धम् । ततः शैवाः शाक्ताः वैष्णवाश्च आगमाः लोके सुप्रसिद्धाः ।

**आगमप्रामाण्यम्** सर्वज्ञैः श्रीकण्ठनाथादिभिरुक्तत्वेनैवागमानां प्रमाणत्वम् । तदाश्वस्तानां साधकानां तदनुसारिणः क्रियाकलापस्य सफलत्वेनापि प्रामाण्यं सुसंसिद्धमेव ।

दृश्यताम्— **आगमः (मुख्यतः) इति** अत्रैव प्रकरणे ।

**—अपरिच्छिन्नत्वमस्य**=स्पष्टमुक्तमत्र विषये । तद्यथा—

नहि प्रत्यक्षं मायाप्रमातुः सर्वत्र क्रमते, अनुमानमप्येवम् । नहि यद्यदस्ति तत्र तत्र लिङ्गव्याप्त्यादिग्रहणसम्भवः । आ मस्त्वपरिच्छिन्नप्रकाशात्मकमाहेश्वर-विमर्शपरमार्थः किं न पश्येत् । (ई० प्र० वि० खं० २. पृ० १८६)

**आगमप्रामाण्ये तारतम्यम्** उक्तमत्र विषये—

नरर्षि-देव-द्रुहिण-विष्णु-रुद्राद्युदीरितम् ।
उत्तरोत्तरवैशिष्ट्यात् पूर्वपूर्वप्रबाधकम् ॥
(सर्वज्ञानोत्तरवाक्यमुद्धृतं तं० आ० ४-२४८)

एतदनुसारं मानव-ऋषि-देव प्रोक्तानामागमानामुत्तरोत्तरवैशिष्ट्यम्,

तदुपरि च ब्रह्मविष्णुरुद्रेश्वर-सदाशिव-शक्ति-शिवोपदिष्टानामिति तारतम्यमागमानाम्। लकुलीश-श्रीकण्ठयोरीश्वरभट्टारकावतारत्वेन तत्तुल्यत्वमवगन्तव्यम्।

—**नियमः** अधिकारभेदानुसारमेवागमप्रामाण्यप्रवृत्तिर्लोके।

तदुक्तम्—

सर्व एव ह्यागमो नियताधिकारि-देश-काल-सहकार्यादि-नियन्त्रितमेव विमर्शं विधत्ते, विधिरूपो निषेधात्मा वा। (ई० प्र० वि० खं २ पृ० ८३)

—**मुख्यत्वम्** तच्च शैवागमानाम्। तत्रापि सिद्धान्तशैवाद्, वामम्, वामाद् दक्षिणम्, ततः कुलम, ततः कौलम्, ततो मतं, ततश्च त्रिकम् आगमशास्त्रं सर्वोत्तमम्। तदुक्तम् –

वेदाच्छैवं ततो वाम ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥
(उद्धरणम्० प० श्री० वि० पृ० ९२)

वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित्।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः॥
(उद्धृतं निशाटनागमवाक्यम् प० श्री० वि० पृ० ९२)

**आगमवक्तृत्वम्** भैरवाद्युपदिष्टत्वं यदागमानां तत्रेदं रहस्यम। योगसिद्धिभाग् गुरुः स्वयमेव ब्रह्म-विष्णु-रुद्र-भैरवाद्यवस्थानां मध्ये क्वापि स्थितः सन् यत्तत्त्व-विमर्शनं पश्यन्त्यादिवाग्विमर्शेन अपरोक्षतया विदधाति तद्भैरवादि-विमृष्टमेव गणयति। पुनश्च पश्यन्तीविमृष्टस्य तत्त्वस्य विषये यदा मध्यमया विचारणं करोति, यदा वा वैखर्या तद् भाषते, तदा "सुप्तोऽहं किल विललाप" इतिवत् परोक्षतयैव विचारणभाषणादि कुरुते। "भैरवादिदशास्थितोऽहमेवैवं विमृष्टवान्" इति तात्पर्यं भैरव उवाचेत्यादिवाक्यानाम्। तदुक्तम्—

अहमेव सा परावाग्देवीरूपैव सर्ववाच्यवाचकाविभक्ततया एवमुवाचेति

तात्पर्यम् । 'सुप्तोऽहं किल विललाप' इति ह्येवमेवोपपत्तिः । केवलमत्र वेदकतादात्म्यप्रतिपत्त्या तुर्यरूपत्वात्, (स्वाप)मदादिषु तु मोहावेशप्राधान्यात् इतीयान् विशेषः । परोक्षता तु समानैव । ... ... ... ... ... ... "देव्युवाच" इति यावदुक्तं स्याद्—अहमेव सततं सर्वमभेदेन विमृशामि पराभूमौ ; अन्यथा पश्यन्तीमध्यमाभूमिगं स्फुटमिद प्रथनं न स्यात् । तावदेवोक्तं भवति 'देव्युवाच' इति । एवमेव पुरस्ताद् "भैरव उवाच" इति मन्तव्यम् । तत्रापि हि "स्वपरशक्त्यविभागमयो भैरवात्मैवाहमुवाच" इत्यर्थः । (प० त्री० वि० पृ० ९ तः ११ यावत्)

**आगमाः** शिवशक्तिसंवादरूपाणि रहस्यमयानि शास्त्राणि । तानि च भैरव-लकुलीश-स्वच्छन्दादिभिर्भगवद्भिरुपदिष्टानि शास्त्राणि; विशेषतः शिवोक्तानि तानि ।

उक्तं यथा

आगतं पञ्चवक्त्रात्तु गतं च गिरिजानने ।
मतं च वासुदेवस्य तस्मादागममुच्यते ॥
(उद्धरणं महास्वच्छन्दतन्त्रात्)

**—ऊर्ध्वाम्नायरूपाः** ईशानादिमुखेभ्यः समुद्भूताः भेद-मेदाभेददृष्टिप्रधाना आगमाः शैवाः । तेषु भेदप्रधाना दश शिवागमाः, भेदाभेदप्रधानाश्चाष्टादश रुद्रागमाः । तदुक्तम्—

स्रोतस्यूर्ध्वे भवेज्ज्ञानं शिवरुद्राभिधं द्विधा ।
इत्यारभ्य
अष्टाविंशतिरित्येवमूर्ध्वस्रोतोविनिर्गताः ॥
(उद्धरणं श्रीकण्ठीसंहितातः; तं० आ० वि० खं० १ पृ० ४०)

**—ऊर्ध्वोर्ध्वाः आम्नायाः** सामान्यतो भैरवागमाः चतुष्षष्टिः; विशेषतश्च सौरभर्गशिखाद्याः षडागमा येषु पूर्वे त्रया त्रिकेति वा षडर्धेति वा प्रसिद्धाः । एते च सर्वेऽभेददृष्टिप्रधानाः । तदुक्तम्—

............तदूर्ध्वोर्ध्वं स्रोतो यद् भेदवर्जितम् ।।
सौरभर्गशिखादीनि ततश्शास्त्राणि तेनिरे ।
उक्तं भर्गशिखायां च देवेन परमेष्ठिना ।।
ऊर्ध्वस्रोतोद्भवं ज्ञानमिदं तत् परमं प्रिये ।
परमध्वनिनोर्ध्वोर्ध्वं संविद्रूपाभिधायिना ।।
ईशानवक्त्रनिर्यातात् सिद्धान्ताद भेदमाविशत् ।
(मा० वि० वा० १ – १६० तः १६३)

**—गौणाः** ते च ब्रह्मविष्णुगणेश-कार्तिकेय-सूर्याग्निवाय्वादिभिः प्रोक्ताः आगमाः, वेद-पाञ्चरात्राद्याः, पुराणेषु च संगृहीताः। दृश्यताम्—**आगमप्रामाण्ये तारतम्यम्** इति–

**—गौणतराः** बौद्धार्हताद्याः। दृश्यताम्

**आगमप्रामाण्ये तारतम्यम्** । इति

**—तन्त्राख्याः** प्रायः सर्वेऽपि शैवशाक्ताः आगमास्तन्त्राणीत्युच्यन्ते । वस्तुतोऽपरोक्षस्तत्त्वसाक्षात्कारः आसमन्तादर्थं गमयतीत्यागमः । स एवोपदेशेन शिष्यप्रशिष्यक्रमेणाग्रे तन्यमानः सन् लोकव्यवहारे तन्त्रनाम्ना प्रसिद्धः । एवंविधा प्रसिद्धिः प्रचलति काश्मीरकाणां शैवानां परम्परासु । ततः साक्षात्कारात्मकाः आगमा एवोपदेशक्रमे तन्त्राणि ।

**—त्रिकाख्याः** ऊर्ध्वोर्ध्वात् स्वच्छन्दनाथस्य मुखात् समुद्भूतानां षण्णां सौरभर्गशिखादीनामागमानां मध्ये प्रथमे त्रयस्त्रिकाख्याः आगमाः, षडर्धागमा इति च प्रसिद्धाः। ते च सिद्धातन्त्रम्, वामकतन्त्रम् (नामकतन्त्रम्), मालिनीतन्त्रं चेति । तदुक्तम्—

इह यावत्तु मुख्येयं षडात्मा शास्त्रसन्ततिः ।।
एतत्पूर्वार्धभागीनि त्रिकशास्त्राणि यानि तु ।
षडर्धसंज्ञया तानि गुरुभिर्भावितान्यलम् ।।
(मा० वि० वा० १—१६४, ६५)

तन्त्रालोकविवेके जयरथेन तेषां नामानि सिद्धातन्त्रं, नामकतन्त्रं, मालिनीतन्त्रं चेति प्रोक्तानि । तत्र शारदालिप्यां वकारनकारयोर्मिथः स्वल्पमेवान्तरम् । ततोऽनुमातुं शक्यते यद् द्वितीयस्य नाम वामकमिति, लेखकप्रमादेन च पाण्डुलिपिषु नामकमिति लिखितं दृश्यते । तदुक्तम् —

तच्च-सिद्धानामक-मालिन्याख्यखण्डत्रयात्मकत्वात् त्रिविधम् । तत्र क्रियाप्रधानं सिद्धातन्त्रं, ज्ञानप्रधानं ना(वा)मकतन्त्रं, तदुभयमयं मालिनीमतमिति । (तं० आ० वि० खं० १. पृ० ४९)

**—पञ्चस्रोतोमयाः** स्वच्छन्दनाथस्य पञ्चमुखानि । तानि च ईशानः, तत्पुरुषः सद्योजातः, वामदेवः, अघोरः इति । तेभ्यः समुद्भूता आगमाः पञ्चस्रोतःशब्देन प्रसिद्धाः । तेषु दश शिवागमाः, अष्टादश रुद्रागमाः, चतुःषष्टिश्च भैरवागमाः । पञ्चभिरीशानतत्पुरुषादिभिरुक्तत्वेनैवेतेषां पञ्चस्रोतः इत्याख्या । तदुक्तम्—

तत्र हि परमेश्वर एव चिदानन्देच्छाज्ञानक्रियात्मकवक्त्रपञ्चकमेलनया पञ्चस्रोतोमयम्, अभेद-भेदाभेद-भेद-दशोटटङ्केन तत्तद्भेदप्रभेदवैचित्र्यात्म निखिलं शास्त्रमवतारयति । (तं० आ० वि० खं० १ पृ० ३६)

**—भैरवात्मकाः** स्वच्छन्दाद्या अष्टावष्टकाः आगमानां, संकलनया ते चतुःषष्टिः । एतेऽभेददृष्टिप्रधानाः । एत एवोर्ध्वस्रोतोमया इत्युच्यन्ते । परिगणितास्ते श्रीकण्ठीसंहितायाम् । तस्याः वाक्यानि तन्त्रालोकविवेके समुद्धृतानि । तद्यथा—

... ... ... ... ... ... ... ... ...

तच्चभेदैः प्रवक्ष्यामि चतुःषष्टिं विभागशः ॥

इत्यारभ्य

एतत् सादाशिवं चक्रमष्टाष्टकविभेदतः ॥ इत्यन्तम्

(श्रीकण्ठीसंहितावाक्यजातमुद्धृतं — तं० आ० वि० खं० १. पृ० ४१-४३)

**—रुद्रात्मकाः** भेदाभेददृष्टिप्रधाना अष्टादशागमाः विजयादिनाभमाजः । तदुक्तम्—

..................रुद्रभेदाँस्त्विमान् शृणु ॥
विजयं चैव निःश्वासमुद्गीतं पारमेश्वरम् ।
मुखबिम्बं च सिद्धं च सन्तानं नारसिंहकम् ॥
चन्द्रांशुं वीरभद्रं च आग्नेयं च स्वयम्भुवम् ।
विसरं रौरवं चैव विमलं किरणं तथा ॥
ललितं सौरभेयं च तन्त्राण्याहुर्महेश्वरि ।
अष्टाविंशतिरित्येवम् .................. ॥

(उद्धरणम् – तं० आ० वि० खं० १. पृ० ४०)

दशशिवागमसंहितेयं संख्याष्टाविंशतिरिति ज्ञेयम् ।

**—विस्तरतः** एकैकस्याप्यागमस्य कतिपयभेदमयत्वादागमानां संख्यातिभूयसी । तदुक्तम्—

एकैकं पञ्चवक्त्रं च वक्त्रं यस्मात् प्रगीयते ।
दशाष्टादशभेदस्य ततो भेदेष्वसंख्यता ॥

(उद्धरणम् तं० आ० वि० खं० १. पृ० ४४)

किञ्च —उपागमानामपि विद्यमानत्वेन नितरां बहुभेदता आगमानाम् ।

**—शिवात्मकाः** भेददृष्टिप्रधाना दश कामजाद्याः । तदुक्तम् —

कामजं योगजं चिन्त्यं मौकुटं चांशुमत् पुनः ।
दीप्तं सूक्ष्मं सहस्राक्षं सुप्रभं कारणं पुनः ।
शिवभेदाः समाख्याताः .................. ।

(उद्धरणं, श्रीकण्ठीसंहितातः —तं० आ० वि० खं० १. पृ० ४०)

**—षडर्धाख्याः**

दृश्यताम् **आगमाः -त्रिकाख्याः** इति ।

**आगमाधिकारः** ईश्वर प्रत्यभिज्ञायास्तृतीयो भागः, आह्निकद्वयात्मकः । तत्र चागमशास्त्रोपदेशानुसारं षट्त्रिंशत्प्रमेयतत्त्वानां सप्तप्रमातृवर्गाणां, जाग्रदादि-

दशानामन्येषामपि च केषाञ्चिदागमिकानां विषयाणां निरूपणमागमशास्त्रदृष्ट्या कृतमाचार्योत्पलदेवेन, व्याख्यातं च विमर्शिन्यामभिनवगुप्ताचार्येण ।

**आगमसंवादरहस्यम्** दृश्यताम्—**आगमवक्तृत्वम्** इति

**आणवयोगः** दृश्यताम्-**आणवोपाय** इति ।

**आणवसमावेशः** ग्राह्यविषयान् प्राणोच्चारादीनालम्ब्य विधीयमानायाः स्वात्मशिवत्वभावनायाः अभ्यासेन लभ्यः स्वात्मशिवभावसमावेशः । आणवोपायाभ्यासलभ्यः शिवत्वसमावेशः तदुक्तम् –

उच्चार-करणध्यान-वर्णस्थानप्रकल्पनैः ।
यो भवेत् स समावेशः सम्यगाणव उच्यते ॥

(मा० वि० तं० २ २१)

**आणवादीनां परस्परं वैचित्र्यम्** आणवे भेदनिष्ठस्य विकल्पज्ञानाभ्यासस्यात्यन्तं प्राधान्यम, शाक्ते तस्य स्फुरत्तामात्रं स्वात्मनिष्ठम्, शाम्भवे पुनस्तस्य लय एव, शाम्भवस्य निर्विकल्पस्वात्मसाक्षात्काराभ्यासरूपत्वात् । तदुक्तम्—

आणवे विकल्पौल्वण्यम्, शाक्ते तस्य स्फुरत्तामात्रम्, शाम्भवे तु निर्विकल्पत्वमित्युत्तरोत्तरपर्वानुशीलनादुक्तरूपमेषां नैश्चिन्त्यमव्याहतम् ।

(म० मं० प० पृ० १६१)

अकिञ्चिच्चिन्तनं सर्वेषामपि शाक्तानामाणवानां च योगप्रकाराणां सारमिति तात्पर्यम् । सर्वेषां तत्रैव यतो विश्रान्तिः ।

**—वीर्यम्** वीर्यं तावत् सारः । तस्य चाणवादिष्वयं क्रमः-स्थानकल्पनायाः सारं ध्वनियोगस्तस्य करणयोगस्तस्योच्चारयोगस्तस्य बुद्धिध्यानयोगस्तस्य शाक्तोपायस्तस्य च शाम्भवोपायः इति । तस्य तस्योपायस्य तत्तद्वीर्यराहित्ये निष्फलत्वम् । तदुक्तम्—

अकिञ्चिच्चिन्तनं वीर्यं भावनायाञ्च सा पुनः ॥
ध्याने तदपि चोच्चारे करणे सोऽपि तद् ध्वनौ ।
स स्थानकल्पने बाह्यमिति क्रमुपाश्रयेत ॥
वीर्यं विना यथा षण्ठस्तस्याप्यस्त्यथवा बलम् ।
मृतदेह इवेयं स्याद् बाह्यान्तःपरिकल्पना ॥

(तं० आ० ५-१५६ तः १५८)

भावनात्र शाक्तोपायरूपा ।

**आणवे आलम्बनानि** ग्राह्यान् विषयानालम्ब्य विधीयमानः स्वात्ममहेश्वरभावस्य भावनाभ्यासः आणवोपायः तत्र संविदः समीपतरो ग्राह्यो विषयो बुद्धिः । ततो दूराः प्राणोच्चाररूपा प्राणापानादिवृत्तयः पञ्च । ततोऽपि दूरः प्राणोच्चारे स्फुरन्नव्यक्तो ध्वनिः । ततोऽपि दूरतरं स्थूलं शरीरं, तत्रस्थानि च नाडीचक्रानुचक्राणि, ततोऽपि दूरतरं बाह्यं विषयजातं देशकालात्मक षडध्वरूपम् । एतान्यालम्बनान्यालम्ब्याभ्यस्यमानाः आणवोपाया अपि क्रमेणोत्तराधरपदवीभाजः ।

उक्तं संक्षेपत इदम् —

विकल्पः कस्यापि स्वयमनुपयन् पूर्णमयता-
मुपायात् संस्कारं व्रजति स उपायोऽत्र बहुधा ॥
धियि प्राणे देहे तदनु बहिरित्याणवतया
स निर्णीतो तेषां परफलविधौ कापि हि भिदा ॥

(तं० सा० पृ० ४३)

**आणवेन शाक्तः** आणवोपायाभ्यासो यदा परिपूर्णां परिपक्वतामुपयाति तदासौ स्वत एव शाक्तोपायपदवीमधिरोहति । उक्तमेतत्—

तस्मिन् रूढः समभ्येति शाक्तमस्माच्च शाम्भवम् ।

(तं० व० धा० ३-३९)

**आणवेन शाम्भवः** कदाचिदाणवोपायाभ्यासस्तथाविधां प्ररूढतां सुपरिपक्वतां चासादयति यथा स्वत एव निर्विकल्पशाम्भवसाक्षात्कारपदवीमधिरोहति । उक्तमेतत् —

एवं धीप्राणसंघट्टद्वारेणान्तः समाविशन् ।
शाम्भवीं परमां धारामाणवेन प्रपद्यते ॥
(तं० व० धा० २ – १७)

**आणवोपायः** परिमितान् प्रमेयपदार्थानुपायत्वेनालम्बनीकृत्य तत्तदालम्बनविषये परिपूर्णशिवभावभावनाभ्यासपूर्वकं समभ्यस्यमानः स्वात्ममहेश्वरभावस्यैव भावनाभ्यासः। तदुक्तम् –

यदा तूपायान्तरमसौ स्वसंस्कारार्थं विकल्पोऽपेक्षते, तदा बुद्धि-प्राण-देह-घटादिकान परिमितरुपानुपायत्वेन गृह्णन्नणुत्वं प्राप्त आणवं ज्ञानमाविर्भावयति । (तं० सा० पृ० ३५)

**आणवोपाय-भेदविस्तारः** बुद्धिध्यानादारभ्य वाह्यचर्यापर्यन्ताः सर्वेऽपि विधय आणवोपायाः। तदुक्तम् —

एवं धीप्राणसम्बन्धावान्तराद् बाह्यतोऽपि च ।
चर्यया यः समावेशः स इहाणव उच्यते ॥
(तं० व० धा० ३ — ३८)

**आणवोपाय-रहस्यम्** आणवोपायालम्बनानि देहप्राणादीनि। तेषु चिद्रूपताया उन्मज्जनस्याचिद्रूपतायश्च निमज्जनस्याभ्यासेनाद्वय-स्वात्म-संवित्-साक्षात्कारः सम्पद्यते। तदुक्तम —

तस्य चिद्रूपतां सत्यां स्वातन्त्र्योल्लासकल्पिताम् ॥
पश्यञ्जडात्मताभागं तिरोधायाद्वयो भवेत् ।
(तं० आ० ५ – १०, ११)

बुद्धौ प्राणे तथा वेहे देशे या जडता स्थिता ।
तां तिरोधाय मेधावी संविद्रश्मिमयो भवेत् ॥
(उद्धरणम् – तं० आ० वि० खं० ३ पृ० ३१९)

**आणवोपायस्य शाम्भवपदे विश्रमणम्** आणवो-

पायोऽपि यदा सुपरिपक्वो भवति तदा शाक्तोपाय-
त्वपदारोहणपूर्वं वा, तत् पदोल्लङ्घनेनापि वा, निर्विकल्पस्वात्मशिवत्वसाक्षात्कारात्मिकां शाम्भवीं स्थितिमारूढो भवति। तदुक्तम्—

अणुर्नाम स्फुटो भेदस्तदुपाय इहाणवः।
विकल्पनिश्चयात्मैव पर्यन्ते निर्विकल्पकः॥
(तं० आ० १—२२१)

**आणवो मलः (अर्थतः)** अपूर्णम्मन्यता। अणूनामणुत्वप्रयो-
जकः पारमेश्वरेच्छाविकासावभासितः स्वरूपस्व-
भावयोः सङ्कोचः। तदुक्तम्—

अणूनामयमाणवः अपूर्णम्मन्यतात्मा लोलिकारूप।
(स्व० उद्० खं० १. पृ० २३३)

**—द्विप्रकारकः** मायीयः प्रमाता शुद्धं परिपूर्णं च चैतन्यं स्वात्मतया न विमृशति "अहम्" इति, अपि तु परिमितं जडं देहादिमेव स्वात्मतयाभिमनुते "अहम्" इति। इत्ययमेकः प्रकार आणवस्य मलस्य यः सकलसमाख्येषु प्रलयाकलेषु च प्राणिषु स्पष्ट विजृम्भते।

केचित् प्रमातारः स्वमात्मानं देहादेर्जडादर्थादुत्तीर्णं शुद्धचिद्रूपमेव पश्यन्तोऽपि स्वात्मन ऐश्वर्यं नाभिजानन्ति। प्रत्युत सांख्यपुरुष-प्रायाः सन्तः कर्तृत्वहीनं चिद्रूपम् "अहम्" इति स्वात्मतया विमृशन्ति। स एष द्वितीयः प्रकार आणवस्य मलस्य। तयोरेकः स्वरूपसङ्कोचात्मकोऽपरश्च स्वशक्तिसङ्कोचात्मकः। एकः स्वस्वरूपतिरोभावोऽपरश्च स्वस्वभावतिरोभावः। द्वितीयोऽयं प्रकारः विज्ञानाकलेषु विजृम्भते, सकलेषु; प्रलयाकलेषु चाप्यस्त्येव। उक्तमेतत् संक्षेपत एव—

स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः॥
(ई० प्र० ३—२—४) विस्तरतश्च तत्रैव विमर्शिन्याम्।

**—मूलतः** परमेश्वरस्य स्वात्मनः स्वरूपस्य च प्रच्छादनात्मिका या क्रीडा तद्विलास एवाणवो मलो मूलतः । न तस्योदयः कुतोऽपि कारणान्तरात् ततः । पारमेश्वरी स्वतन्त्रा इच्छैवाणवस्य मलस्याभासिका । तदुक्तम्—

स्वात्मप्रच्छादनक्रीडामात्रमेव मलं विदुः ।
स्वतन्त्रो हि विभुः किञ्चित् किं न स्वात्मनि भासयेत् ॥
(मा० वि० वा० २ – १८६)

अत्र "किञ्चित्" इति पाठः संशयित इव भाति ।

दृश्यतां च—

स्वात्मीया स्वस्वातन्त्र्योल्लासि । ······ ··इत्यादि ।
(स्पं० नि० पृ० २३)

**—स्वरूपतः** स्पष्टं व्याख्यातो यथा—

अणुर्नाम पूर्णाहम्भाव परामर्श-शून्यत्वात् सङ्कुचितम्मन्यो जीवः । तद्भाव एवाणवम । तच्चा नात्मन्यात्मज्ञानमात्मन्यनात्मज्ञानं च । (म० मं० प० पृ० ३१)

परमेश्वरो हि ज्ञानक्रियारूपतया प्रकाशविमर्शस्वभावः । तस्य च ज्ञातृत्वे विस्रष्टृत्वे चैकतरस्मिन्नप्यपरामृश्यमाने मलमाणवम् । (तदेव)

**आनन्दः (उच्चारयोगे)** उच्चारयोगस्य सिद्धिपथे पारमैश्वर्यमण्डितामनवच्छिन्नां पूर्णां संविद्रूपतां प्रविविक्षोर्योगिनस्तत्र प्रवेशात् प्राक् पूर्णतायाः स्पर्शमात्रेण स्वात्मानन्दस्य काप्यपूर्वानुभूतिर्जायते । असौ तत्र प्रथमं योगसाफल्यचिह्नम्, प्रथमा च योगसिद्धेरवस्था । तदुक्तम्—

अत्र भावनया देहगतोपायैः परे पथि ।
विविक्षोः पूर्णतास्पर्शात् प्रागानन्दः प्रजायते ॥
(तं आ० ५—१००, १०१)

**—मातृकाक्रमे** परमेश्वरस्य यो निजया पारमैश्वर्यरूपया शक्त्या सह परस्पराभिमुख्यात्मकः सङ्घट्टः, स एवानन्दः स एव

च 'आ' इत्यनेन मातृकावर्णेनाभिव्यज्यते । गुर्वनुग्रहमात्रगम्येन रहस्यातिरहस्यात्मना योगविधिना आकारात्मकस्य वर्णस्य पारमेश्वरस्यानन्दरूपत्वस्य च सममेवाभिव्यक्तिर्भवति मातृकाक्रमेण शाम्भवोपायाभ्यासिनः साधकस्य । ततः आनन्दः=आकारः । तदुक्तम् –

अकुलस्यास्य देवस्य कुलप्रथनशालिनी ।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः ॥
तयोर्यद् यामलं रूपं स संघट्ट इति स्मृतः ।
आनन्दशक्तिः सैवोक्ता यतो विश्व विसृज्यते ॥
(तं० आ० ३–६७, ६८)

**आनन्दकन्दः** वेदान्तिनः सच्चिदानन्दरूपत्वं ब्रह्मणो वदन्ति, परमभिनवाः शैवाः सत्तायाश्चितायाः आनन्दतायाश्च कन्दस्थानीयं मूलतत्त्वं ब्रह्मेतिप्रतिपादयन्ति । यथोक्तम्—

अभिनवरमणीयं सच्चिदानन्दकन्दं
स्वनवनवविलासोल्लासनैकप्रवीणम् ।
अनुभवसुरहस्यं मङ्गलं मङ्गलाना-
मधिहृदि परमेशं मौनमेवाश्रयेऽहम् ॥ (आ० वि० १-१)

**आनन्दभूमिकाः (आणवयोगे)** उच्चारादियोगाभ्यासे साधकः प्रथम शून्यनाम्नि जीवचैतन्ये विश्रान्तिं लभते, तदनन्तरं तस्य प्रमाणप्रमेयप्रपञ्च-राहित्ये, ततश्च प्राणापानवृत्त्योस्तदनन्तर समानवृत्तौ, उदानवृत्तौ, व्यानवृत्तौ च विश्रान्तिमासादयन् षडानन्दभूमिकाः रसयति । ताश्च क्रमेणानेन—निजानन्दो, निरानन्दः, परानन्दो, ब्रह्मानन्दो, महानन्दश्चिदानन्दश्चेति । तदेतत् स्वात्मानन्दरूपतायाः विश्लेषणं काश्मीरशैवशास्त्र एव सम्यक् कृतं तदाचार्यैः । उक्तं यथा—

एवं शून्यात् प्रभृति व्यानान्तं या एता विश्रान्तयस्ता एव निजानन्दो, निरानन्दः, परानन्दो, ब्रह्मानन्दो, महानन्दश्चिदानन्द इति ।
(तं० सा० पृ० ३८)

एतेषां षण्णामपि स्वरूप निजे निजे स्थाने स्पष्टीकृतमस्त्यत्र कोषे । इति तत्र तत्रैव द्रष्टव्यम् ।

**—पञ्च** किञ्चित्स्थूलेन विश्लेषणेन ब्रह्मानन्दं विहाय पञ्चैव भूमिकाः । ताश्च निजानन्दो, निरानन्दः, परानन्दो, महानन्दश्चिदानन्दश्चेति । तदुक्तम्--

निजानन्दः प्रमात्रंशमात्रनिष्ठानिबन्धनः ।
शून्यतामात्रविश्रान्तेर्निरानन्दात्मिका स्थितिः ॥
प्रमेयपदविश्रान्तेः परानन्दोऽप्युदेत्यलम् ।
अनन्तमेयसंघट्टपूर्णे मेये तु सर्वतः ॥
प्रमाणाच्चर्वणायोगान्महानन्द इति स्थितिः ।
समस्त-मान-मेयौघ-कलना-ग्रास-कोविदः ॥
यदा विश्रान्तिमभ्येति निरुपाधिसुनिर्भराम् ।
तदा खलु चिदानन्दो यो जडानुपबृंहितः ।
(मा० वि० वा० २— ३५ तः ३८)

अत्रैतासां पञ्चानामानन्दभूमिकानां स्वच्छन्दनाथस्य शिवस्य पञ्चभिरीशानादिभी रूपैः सह सम्बन्धो योज्य इति ध्वनितं मनाक, परं न सुस्पष्टमुक्तम् ; तद्यथा—

यतो निजानन्दमयी भूमिः शान्त-पदानुगा ॥
निरानन्द-परानन्दौ पुरुषाजातसङ्गतौ ।
... ... ... ... ... ... ... ... ...
महानन्दश्चिदानन्दीभूय भूयः प्रवर्तते ॥
(मा० वि० वा० २-२९ तः ३२)

**—शाक्ते** शाक्तोपायाभ्यासेऽपि षण्णामानन्दभूमिकानां चर्वणा सवेद्यते साधकैः । परमसौ स्वात्ममात्रालम्बनेनैव भावनाभ्यासेन नोपायान्तरमपेक्षते । उच्चारयोगे तु प्राणवृत्त्यादिषु विश्रान्तिरुपायतयोपयुज्यते इत्यनयोः परस्परं मनाग् विशेषः । उक्तमेतत्—

इह तु पुरोक्ताद् बुक्तिकलापाद्
यः प्रविशेत् सद्यो नाशक्तः ।

तं प्रति शाक्तोपायपथेन
प्रकटीक्रियते हृदयस्पन्दः ॥
(इत्यादि विस्तरतः मा० वि० वा० २-२६ तः ४०)

अत्र प्रकरणेऽग्रे चर्याक्रमचर्चनेनैतत् प्रतीयते यद्रहस्यचर्याभ्यास-सहितेन शाक्तोपायाभ्यासेनैतासामानन्दभूमिकानां चर्वणाऽनायासमेव सम्पद्यते इति । तत आणवोपायसचिवोऽपी शाक्तोपायः इति ।

**—षट्** तन्त्रालोके सूक्ष्मतरेण विश्लेषणेन परानन्द-महानन्द-योर्मध्ये ब्रह्मानन्दस्यापि स्थापना कृता । तदुक्तम्—

निजानन्दे प्रमात्रंशमात्रे हृदि पुरा स्थितः ॥
शून्यतामात्रविश्रान्तेर्निरानन्दं विभावयेत् ।
तत्रानन्तप्रमेयांशापूरणापाननिर्वृतः ।
परानन्दगतस्तिष्ठेदपानशशिशोभितः ।
ततोऽनन्तस्फुरन्मेयसघट्टैकान्तनिर्वृतः ॥
समानभूमिमागत्य ब्रह्मानन्दमयो भवेत् ।
ततोऽपि मानमेयौघकलनाग्रासतत्परः ॥
उदानवह्नौ विश्रान्तो महानन्दं विभावयेत् ।
तत्र विश्रान्तिमभ्येत्य शाम्यत्यस्मिन् महार्चिषि ॥
निरुपाधिर्महाव्याप्तिर्व्यानाख्योपाधिवर्जिता ।
तदा खलु चिदानन्दो यो जडानुपबृंहितः ॥
न ह्यत्र संस्थितिः कापि विभक्ता जडरूपिणः ।
(तं आ० ५–४४ तः ५०)

न च द्विप्रकारेयं प्रतिपादना विरोधावहा । यतः सूक्ष्मतरेण विश्लेषणेन भूमिकानां संख्यैवं वृद्धिमायाति, परस्परसंश्लेषणेन च न्यूनताम । स एव सर्वत्र तत्त्व-भुवन-प्रमातृवर्गादिविश्लेषणे सिद्धान्तोऽभिनवगुप्तस्य । मालिनीविजयवार्तिकादनन्तरं निर्मितस्य तन्त्रालोकस्य बलवत्तरं प्रामाण्यमपि स्वीकार्यं सुधीभिः ।

**आनन्दयोगः कौले** रहस्यचर्यात्मकः सद्यः समकालं च भुक्तिमुक्तिप्रद उपायः। नासौ प्रायः स्पष्टं व्याख्यायते; तदधिकारिणामतिदुर्लभत्वात्, अनधिकारिणां च सन्मार्गाद् भ्रंशस्याऽऽशङ्कातः। सङ्केतमात्रतः प्रतिपादितस्तन्त्रालोके तद्विवेके चैकोनत्रिंश आह्निके। इदमत्र रहस्यम्—कामसुखानन्दचर्वणाकाल एव तीक्ष्णतरयावधानशक्त्या गुरूपदेशमात्रगम्येन विधिना शिवशक्तिसंघट्टात्मके जगदानन्दे प्रवेशयुक्तिरेष योग इति मनागुच्यते।

—**त्रिके** आनन्दशक्त्युद्रेकयुतोऽनुपाययोगः।

दृश्यताम्—**अनुपायो योगः** इति

**आनन्दशक्तिः** शिवस्य पञ्चस्वन्तरङ्गशक्तिषु द्वितीया।

—**अभिव्यक्तौ** अनुत्तरस्य परमशिवस्य नैसर्गिकस्वभावभूताऽऽनन्दोच्छलत्तात्मिका स्थितिः। शिवतत्त्वे प्राधान्येनाभिव्यक्ततामुपयान्ती शक्तितत्त्वोन्मेषं प्रत्यौन्मुख्यरूपा स्थितिः। अत एव क्वचित् सिद्धान्तदृष्टया शिवतत्त्वमेवानन्दशक्तिमयं क्वचिच्चोपासनादृशा शक्तितत्त्वमेव तच्छक्तिमयमुक्तम्। तदुक्तम्—

(क) आत्मैव सर्वभावेषु स्फुरन्निवृतचिद्विभुः।
(शि० दृ० १–२)

(ख) निर्वृतचित्त्वाद्येव च शिवत्वमित्यर्थाच्छिवलक्षमपि दर्शितम्।
... ... ... ... ... ... ... ... ... ... ...
निर्वृता वेद्यनिराकांक्षा पूर्णा चिद्यस्य सः। .........
तथालक्षणः शिवः .........। (शि० दृ० वृ०, पृ० ५, ६)

(ग) शिवशक्तिसदाशिवतामीश्वरविद्यामयीं च तत्त्वदशाम्।
शक्तीनां पञ्चानां विभक्तभावेन भासयति॥ (प० सा० १४)

अत्र शिवतत्त्वं चित्, शक्ति तत्त्वं च आनन्दः इत्युक्तम् यतश्चिदेव बहिर्मुखतायाः स्थितौ शिवः, आनन्दस्य च बहिर्मुखो विकासः

शक्तितत्त्वम् । ततः शिवः, शक्तिः, सदाशिवः, ईश्वरः, विद्या च क्रमेण चिदानन्देच्छाज्ञानक्रियाणां पञ्चानां शक्तीनां बहिर्मुखो विकासः । उत्तरोत्तरमारोहद्भिः साधकैरेष एव क्रमः स्वीकृतः साधनाक्रमानुसारम् । उपरितनः क्रमश्च सिद्धान्तदृशोक्तः । इति न कोऽपि विरोधः ।

**—उपास्तौ** शिवात्मिकाऽऽनन्दशक्तिरेव बहिः सृष्टौ प्रसरन्ती शक्तितत्त्वदशारूपतामापद्यते । तत एवोपासकाः आनन्दशक्तिमेव शक्तितत्त्वस्य बीजं पश्यन्तस्तत्त्वोपासनक्रमे शक्तितत्त्वमानन्दशक्तिरूपतयोपासते । तत एवोक्तम् —

चित्प्राधान्ये शिवतत्त्वम्, आनन्दप्राधान्ये शक्तितत्त्वम् ।

(तं० सा० पृ० ७४)

आनन्दशक्तेर्बहिरुल्लास एव यतः शक्तितत्त्वं तत उपास्तौ शक्तितत्त्वमानन्दशक्तिप्रधानतयैव भाव्यते इति न कोऽपि विरोधस्तन्त्रसारतन्त्रालोकयोः शिवदृष्टि-प्रत्यभिज्ञाशास्त्राभ्यां सहेति विदाङ्कुर्वन्तु सुधियः । दृश्यतां च ष० त० सं० पृ० ३ इति ।

**लोकव्यवहारे** भोग्यविषयोपभोगकालेऽनुभवितुर्या ताटस्थ्यविगमेन चमत्कारमयता सैव लोकव्यवहारे आनन्दशक्तेरभिव्यक्तिः । तामेवादाय तीव्रावधाना योगिनः शिवस्वभावभूतामनवच्छिन्नामानन्दशक्तिं प्रविशन्ति रहस्योपायबलेन । उक्तं च —

तथा हि मधुरे गीते स्पर्शे वा चन्दनादिके ।
माध्यस्थ्यविगमे यासौ हृदये स्पन्दमानता ॥
आनन्दशक्तिः सैवोक्ता यतः सहृदयो जनः ।
(तं० आ० ३—२०९, २१०)

यद्यपि सर्व एवायं विश्वप्रपञ्चः आनन्दशक्तिस्फारस्तथापि स्फुटोपलम्भादत्र तस्या एवमुक्तम् । (तं० आ० वि० खं० २. पृ० ३०१)

**—प्रसरे** सर्वं तत्त्वभुवनादिरूपं विश्वमानन्दशक्तेरेव बहिर्मुखः प्रसरः । सैव स्पन्दमाना सृष्ट्युन्मुख्यदशां प्रकटयन्तो सिसृक्षा-

रूपतामापद्यते । सिसृक्षात्मिका पारमेश्वरीच्छा ज्ञानक्रियाशक्ति-द्वय-प्रसरेण क्रमेण विश्वात्मकत्वेनाभाति । ततः सर्वमिदमानन्दशक्ति-विजृम्भितमेव मूलतः । ध्वनितमेतदुत्पलदेवपादैः । तद्यथा—

यत् स्वयं निजरसेन घूर्णसे ।
तत् समुल्लसति भावमण्डलम् ॥
(शि० स्तो० १३ –१५)

**आनन्दादिपञ्चकम्** उच्चाराद्याणवयोगाभ्यासस्य साफल्ये तद्द्योतकानि पञ्च चिह्नान्याविर्भवन्ति साधके ।

तानि च क्रमेण (१) आनन्दानुभूतिः, (२) शरीरोत्प्लु-तिरूपः उद्भवः, (३) कम्पः, (४) निद्रा, (५) घूर्णिश्चेति । तदुक्तम्—

अनया शोध्यमानस्य शिष्यस्यास्य महामतिः ॥
लक्षयेच्चिह्नसंघातमानन्दादिकमादरात् ।
आनन्द उद्भवः कम्पो निद्रा घूर्णिश्च पञ्चमी ॥
(मा० वि० तं–११ ३४, ३५)

तानि च क्रमेण (१) पूर्णतास्पर्शमात्रतः स्वात्मानन्दानुभूतिः; (२) विद्युद्विलासवत् क्षणदृष्ट देहवर्जिते पदे क्षणं समावेशात् शरीर-स्योत्प्लुतिरूपः उद्भवः; (३) सुचिरादभ्यस्ते देहात्मभावे क्षणं विलीमयाने सति देहलतायाः कम्पः; (४) अन्तर्मुखतया परिपूर्ण-संविदन्तःप्रवेशे सति निद्रालुतायाः अभिव्यक्तिः; (५) विश्वा-त्मिकायां पूर्णायां संविदि प्रतिष्ठितत्वे सति घूर्णमानताया अभिव्यक्तिः । तदुक्तम्—

अत्र भावनया देहगतोपायैः परे पथि ।
विविक्षो पूर्णतास्पर्शात् प्रागानन्दः प्रजायते ।
ततोऽपि विद्युदापातसदृशे देहवर्जिते ॥
धाम्नि क्षण समावेशादुद्भव. प्रस्फुट प्लुतिः ।
जलपांसुवदभ्यस्तसंविद्देहैक्यहानितः ॥
स्वबलाक्रमणाद् देहशैथिल्यात् कम्पमाप्नुयात् ।

गलिते देहतादात्म्यनिश्चयेऽन्तर्मुखत्वतः ॥
निद्रायते पुरा यावन्न रूढः संविदात्मनि ।
ततः सत्यपदे रूढो विश्वात्मत्वेन संविदम् ॥
संविदन् घूर्णते घूर्णिर्महाव्याप्तिर्यतः स्मृता ।
(तं० आ० ५—१०० तः १०५)

द्रष्टव्यं च—(तं० सा० पृ० ४०) इति ।

आनन्दादीनां पृथक् पृथग् व्याख्याः अत्रकोशे यथास्थानं द्रष्टव्याः ।

**—करणादियोगेष्वपि** - यद्यप्यानन्दादीनि मख्यतयोच्चारयोगसिद्धेश्चिह्नानि तथापि करणादावप्येतेषामाविर्भावः । उक्तं तथा—

अत्र भावनया देहगतोपायैः परे पथि ॥
विविक्षोः पूर्णतास्पर्शात् प्रागानन्दः प्रजायते ।
(तं० आ० ५ – १००, १०२)
तथोक्त-वक्ष्यमाणैरुच्चारकरणादिभिर्देहगतोपायैः ।
(तं० आ० वि० खं० ३, पृ० ४१२)

वस्तुतः एतानि योगसिद्धिचिह्नानि उच्चारेऽपि देहगतत्वेनैवाविर्भवन्ति, प्राणस्य देहे एव सञ्चरणशीलत्वात्, प्राणवृत्तीनां च देह एव स्वकार्यकरणात् । तदनुसारमेवानन्दादीनामभिव्यक्तिस्थानान्यपि देहे निर्दिष्टानि ।

**आनन्दाद्यभिव्यक्ति स्थानानि** मूलाधारस्थे त्रिकोणे आनन्दस्याभिव्यक्तिः, कन्दे उद्भवस्य (प्लुतेः), हृदि कम्पस्य, तालुनि निद्रायाः, ऊर्ध्वकुण्डलिनीचक्रे च घूर्णेः । तदुक्तम्—

आनन्दचक्रं वह्न्यश्रि कन्द उद्भव उच्यते ।
कम्पो हृत् तालु निद्रा च घूर्णिः स्यादूर्ध्वकुण्डली ॥
(तं० आ० ५ – १११)

**आनन्दोपायः** आनन्दयोगः, अनुपायो योगः ।

**आन्तरत्वम् (भावानाम्)** चिदेकरूपतया प्रकाशमानत्वं भावानाम्। तेषामहम इति विमृश्यमानत्वम्। भावानां प्रमात्रा सहाभिन्नत्वम्; तच्च पूर्णतया शिवशक्त्योः, शाम्भव-शाक्तानां चाकलानां प्रमातॄणाम्। तेषां हि सर्वत्राहमिति-विमर्शशालित्वम्। उक्त तथा—

प्रमात्रैकात्म्यमान्तर्यं ततो भेदो हि बाह्यता।

(ई० प्र० १-८-८)

पूर्वं स्वसंविदैकात्म्येन परिस्फुरतोऽर्थस्यान्तरत्वम्।

(तं० आ० वि खं० ६ पृ. १०)

**आभासवादः सिद्धान्ततः** चिदेकरूपस्य परतत्वस्यैव पारमेश्वरीणां शक्तीनां बहिर्मुखप्रतिबिम्बरूपा आभासा एव भावा इति सिद्धान्तः शैवानाम्। तदुक्तम्—

यथैतत प्रतिबिम्बितं भाति तथैव विश्वं परमेश्वरप्रकाशे। नन्वत्र बिम्बं किं स्यात्। माभूत किञ्चित। ननु किमकारणकं तत्। हन्त तर्हि हेतु-प्रश्नः—तत किं बिम्बवाचोयुक्त्या। हेतुश्च परमेश्वरशक्तिरेव स्वातन्त्र्या-परपर्याया भविष्यति। विश्वप्रतिबिम्बधारित्वाच्च विश्वात्मकत्वं भगवतः। (तं० सा० पृ० ११)

**—तर्कदृष्ट्या** यद्यद् यदा ज्ञायते क्रियते वाऽस्तीतिरूपतया विमृश्यते वा तत् सर्वं तदा चित्प्रकाशैक्यतामापन्नमेव भवति। तेन चित्प्रकाश एव नीलादिसुखादिरूपतया तत्तदभावात्मतयापि वा-भासमानः सन्नेव स्वयं तथा तथा प्रकाशते इति सिद्धान्तः शैवानाम्। तदनुसारं चितप्रकाशादतिरिक्तस्याप्रकाशस्य बाह्यपदार्थस्य सत्तैव नास्ति। तत्वभुवनादिकं सर्वं स्वमहिम्ना नैव सत्तां भजते। अपि तु चित्प्रकाश एव तथा तथाऽऽभासमानः सन्नेतत् सर्वं सत्त्वेनाभा-सयति। तदुक्तम्—

(क) आभासमात्रं हि भावस्य स्वरूपम्, प्रत्याभासं प्रमाणस्य

व्यापारात् । तदेवाभासान्तरव्यामिश्रणया दीपसहस्रप्रभासम्मूर्च्छनवत स्फुटी भवति । (ई० प्र० वि० खं० १ पृ० १२४)

आभासभेदा एव वस्तु; आभासमानतासारत्वाद वस्तुतायाः । योऽप्याभासस्य प्राणभूतो विमर्शः, सोऽपि प्रत्याभासमेव, शब्दस्याभिजल्पात्मनो बोधजीवितप्रख्यस्य प्रत्याभासमेव विश्रान्तेः ।... ... ... ... ... ... ... ...
एवं येन येन मुखेनार्थो विचार्यते तेन तेनाभासमात्रात्मैव, तथैव प्रतिभासनाद विमर्शनाद् अर्थक्रियाकरणाच्चेति सिद्धम ।

(ई० प्र० वि० खं० २. पृ० ९२,९३)

अत्रायमभिप्रायः—

"घटः" इति घटरूपं वस्तु, तद्रूपं च शब्दनम् । उभयं च वस्तुतः घटप्रकाश एव । घटरूपस्य वस्तुनः प्रकाशमानतासारत्वात, अप्रकाशमानतायां घटो वाऽघटो वा न किञ्चिदपि वेति नैव कथमपि निश्चेतुं शक्यम् । यच्च घटः इति शब्दनं, तदपि प्रकाशनान्तरीयक विमर्शनमेव मूलतः । ततस्तदपि प्रकाशाभिन्नम् । तदेव प्रकाशात्मकः विषयस्यावभासः एव वस्तुतः प्रकाशते, ज्ञायते, विमृश्यते, अभिलप्यते, अर्थ्यते, अर्थक्रियायां चोपयुज्यते; न खल्वनाभासस्य विषयस्य सिद्धिः क्वापि । तत आभासरूपमेव विश्वम् । परं नाविद्यावासनादिकारणकं, न चापि स्वप्नसंसारवदसत्यम् । सत्यस्यैव परमेश्वरस्य सद्रूपाणामेव शक्तीनां प्रतिबिम्बात्मकाभासरूपत्वादस्य, संसारे स्थिररूपतायाः सर्वजनोपयोगितायाश्चास्य न स्वप्नकल्पत्वम्, अपि त्वाभासरूपत्वम् । ततो न वन्ध्यासुतकल्पं जगत् नापि मनः सङ्कल्पजम् अपि तु परमेश्वरस्य शक्तीनां बहिराभासरूपमेतत् । तदेतन्महदन्तरं शैवस्याभासवादस्य वेदान्ताभिमताद् वैवर्त्तिकादाभासवादात, पाश्चात्यदार्शनिकाभिमताच्च मनःसङ्कल्पजन्यतारूपादाभासवादात् बौद्धसम्मताच्च संवृतिसत्यत्वात् ।

## ग्रन्थ-संकेत-सूची

| | |
|---|---|
| अ, प्र पं. | अनुत्तरप्रकाशपञ्चाशिका। |
| आ. वि. | आत्मविलासः। |
| ई. प्र. | ईश्वरप्रत्यभिज्ञा। |
| ई. प्र. वि. | ईश्वरप्रत्यभिज्ञाविमर्शिनी। |
| ई. प्र. वि. वि. | ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी। |
| ई. सि. | ईश्वरसिद्धिः। |
| ई. सि वृ. | ईश्वरसिद्धिवृत्तिः। |
| क्र. स्तो. | क्रमस्तोत्रम्। |
| खं. | खण्डः। |
| गी. सं. | गीतार्थसंग्रहः। |
| गु. ना. प. | गुरुनाथपरामर्शः। |
| तं. आ. | तन्त्रालोकः। |
| तं. आ. वि. | तन्त्रालोकविवेकः। |
| तं. वं. धा. | तन्त्रवटधानिका। |
| तं. सा. | तन्त्रसारः। |
| तां. सा. | तान्त्रिकसाहित्य। |
| ने. तं. | नेत्रतन्त्रम्। |
| प. सा. | परमार्थसारः। |
| प. त्री. | परात्रीशिका। |
| प. त्री. वि. | परात्रीशिकाविवरणम्। |

| | |
|---|---|
| प. प्रा. | परा प्रावेशिका । |
| पृ. | पृष्ठम् । |
| प्र. हृ. | प्रत्यभिज्ञाहृदयम् । |
| भैं. स्तो. | भैरवस्तोत्रम् । |
| म. मं. प. | महार्थमञ्जरीपरिमलः । |
| म. श. स्तो. | महानुभवशक्तिस्तोत्रम् । |
| मा. वि. तं. | मालिनीविजयतन्त्रम् । |
| मा. वि. वा. | मालिनीविजयवार्तिकम् । |
| वि. भै. | विज्ञानभैरवः । |
| वि. भै. उ. | विज्ञानभैरव-उद्द्योतः । |
| शि. दृ. | शिवदृष्टिः । |
| शि. दृ. वृ. | शिवदृष्टिवृत्तिः । |
| शि. स्तो. | शिवस्तोत्रावलिः । |
| ष. त. सं | षटत्रिंशत्तत्त्वसंदोहः । |
| स्प. नि. | स्पन्दनिर्णयः । |
| स्प वि. | स्पन्दविवृतिः । |
| स्व. तं. | स्वच्छन्दतन्त्रम् । |
| स्व. उ. | स्वच्छन्द-उद्द्योतः । |
| स्वा. द. | स्वातन्त्र्यदर्पणः । |

———




# श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य प्रकाशनानि

| क्रम सं० | प्रकाशनम् | सम्पादकः/लेखकः | मूल्यम् |
|---|---|---|---|
| १ | काश्मीर शैव दर्शन | डा० बलजिन्नाथ पण्डितः | ३०-०० |
| २ | विक्रमांकदेवचरितस्य साहित्यिकं सर्वेक्षणम् | डा० प्रियतमचन्द्र शास्त्री | ३०-०० |
| ३ | जैन जीवन दर्शन की पृष्ठभूमि | डा० दयानन्द भार्गव | २०-०० |
| ४ | ऋचारहस्यम् | डा० दयानन्द भार्गव | २०-०० |
| ५ | ग्रहलाघवम् (पहला भाग) | डा० रामचन्द्र पाण्डेयः | १२-५० |
| ६ | न्याय-सार-विचार | डा० उमारमण झा | २१-०० |
| ७ | दशपदार्थी | डा० उमारमण झा | १३ ५० |
| ८ | ग्रहलाघवम् (दूसरा भाग) | डा० रामचन्द्र पाण्डेयः | २०-८० |
| ९ | ज्योतिषरत्नमाला | श्री बिहारी लाल शास्त्री | ३६-२५ |
| १० | रघुनाथगुणोदयः | डा० गंगादत्त विनोदः | २७-१५ |
| ११ | परमार्थसारः | डा० द्वारिकानाथ शास्त्री | १५-३५ |
| १२ | ललितास्तवरत्नम् | डा० बलजिन्नाथ पण्डितः | १३-५० |
| १३ | स्वातन्त्र्यदर्पणः | डा० बलजिन्नाथ पण्डितः | २४-०० |
| १४ | समरसारः | श्री बिहारीलाल शास्त्री | |
| १५ | भृङ्गीशसंहिता | श्री यशःपाल खजूरिया | १३२-८० |

एस० एन० मगोत्रा प्रिंटिंग प्रैस, गली खिलौनेया, पक्का डंगा जम्मू ।